पद्माट उरणाक्षश्च पलाण्डुस्तु सुकन्दक ।
लतार्कदुर्द्रुमौ तत्र हरितेथ महौषधम् ॥ १४८ ॥
लशुन गृञ्जनारिष्टमहाकन्दरसोनका ।
पुनर्नवा तु शोथघ्नी वितुन्न सुनिषण्णकम् ॥ १४९ ॥
स्याद्वातक शीतलोपराजिता शणपर्ण्यपि ।
पारावताङ्घ्रि कटभी पण्या ज्योतिष्मती लता ॥ १५० ॥
वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका ।
विष्वक्सेनप्रिया घृ(गृ)ष्टिर्वाराही बदरेत्यपि ॥ १५१ ॥
मार्कवो भृङ्गराज स्यात्काकमाची तु वायसी ।
शतपुष्पा सितच्छत्त्रातिच्छत्त्रा मधुरा मिसि ॥ १५२ ॥

---

न्मेषवदक्षिण्यस्योरणाक्ष । इन्दुमाया – चक्रमर्द स्मृतश्चक्री प्रपुन्नाडश्च नामत । एकरेतो दद्रुहरो मेषाक्षि-ज्वगन्नक स ॥ पिपर्ति धातूपलण्डु । तत्र हरिते तत्र नीले पलाण्डौ लतार्को लत्तर्काख्य । दुष्टो द्रुमो-पवित्रत्वात् । धन्वन्तरिरपभेदेनाह– पलाण्डुर्म(र्य)वनेष्टश्च मुकुन्दो मुखदूषक । हरिणोन्य पलण्डुस्तु लतार्को द्रुमश्च स ॥ १४८ ॥ सुश्रुतस्त्वाह– लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधम् । करणश्च पलाण्डुश्च स्तवनकोऽपराजित ॥ गृञ्जन यवनेष्टश्च पलाण्डोर्दश जातय । महौषध सर्वरोगजित्त्वात् । लशति छिनत्ति रोगान्– लशुनम् । गृञ्जति कुत्सित शब्द्यते गृञ्जन । न रिष्यत्यरिष्ट । रसोन पञ्चरस-त्वात् । आह च– रसोनो लशुनरिष्टो म्लेच्छकन्दो महौषधम् । महाकन्दो रसाख्योन्यो गृञ्जनो दीर्घ-पत्रक । महौषधगृञ्जनादीनामाकृतिभेदेपि रसाधैक्यादभेद मन्यते । पुनर्नवेव ( छिनापि ) विशाख-त्वात् । आह च– पुनर्नवो विशाखश्च कठिल्ल स शिलाटक । वृश्चीव क्षुद्रवर्षाभूर्दीर्घपत्र कठिल्लक ॥ वितुद्यते वितुन्नक नाम शाकम् । सुष्ठु निषीदन्त्यस्मिन् गुणा सुनिषण्णकम् । आह च– शितिवा[ सा ]-र सूतपुत्रस्तुल्या(?) च सुनिषण्णक । शाकभेदोयम्, यदाह– पाठा शूषा शटी शाक वास्तुकं सुनिषण्णकम् । विद्यध्मवस्त्रसि वर्चोभिदि तु वास्तुकम् ॥ १४९ ॥ शीतलवातक इत्येका सज्ञा, यत्तु धन्वन्तरि शणपर्णी शीतलवातक इत्याह । द्वयर्थेऽपराजिता शीतलवातको गिरिकर्णिका च । कटत्यावृणोति कटभी । पण्या स्तुत्या । ज्योतिष्मती– अग्न्याभत्वात् । लता दूरप्रसरात् । आह च– ज्योतिष्मती तु कटभी स्या-त्सुवर्णलतेति च । ज्योतिष्का च शिभासा च लवणोका च दुदना ॥ त्र्यर्थे लता प्रियङ्गुर्ज्योतिष्मती सरिवा च । द्वयर्थे पारावतपदी काकजङ्घा ज्योतिष्मती च ॥ १५० ॥ वर्षासु भव वार्षिकम् । आह च– त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका । बलभद्रा बलद्या वार्षिक गिरिसानुजम् ॥ वाराही वराहकान्ता, ( अत एव विष्णुवल्लभा ) । अत एव घृ[ गृ ]ष्टिव[ र्व ]पणात् । त्र्यर्थे बदरा सुवर्चला अश्वगन्धा वाराही च ॥ १५१ ॥ मवति सपृच्यते मार्कव । भृङ्गवद्राजते रञ्जयति कृष्णी-करोति च भृङ्गराज, भृङ्गरजोपि । आह च– भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । अङ्गारकस्त्वेकरजो भृङ्गार केशरञ्जन ॥ काकवर्चसा ते( ते ) वर्णेन सपृच्यते काकमाची । अत एव वायसी, काचमाच्यपि । आह च– काचमाची ध्वाङ्क्षमाची काकसाह्वा च वायसी । शतपुष्पा बहु-पुष्पा । सितच्छत्राभा ॥ १५२ ॥ अत्रान्यथमुखानि पुष्पाण्यस्या अवाक्पुष्पी ॥ शारीरिव कारवी

अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी ।
तस्यां कटम्भरा राजबला भद्रबलेति च ॥ १५३ ॥

जनी जतूका जन(र)नी जतुकृच्चक्रवर्तिनी ।
संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ॥ १५४ ॥

कर्चूरोपि पलाशोथ कारवेल्लः कटिल्लकः ।
सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः ॥ १५५ ॥

कूष्माण्डकस्तु कर्कारु(रू)र्वारुः कर्कटी स्त्रियौ ।
इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे ॥ १५६ ॥

चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी ।
अर्शोघ्नः सू(शू)रणः कन्दो गण्डीरस्तु समष्ठिला ॥ १५७ ॥

---

कर्णिका । आह च—शतपुष्पा मिसिर्घोषाघाटका माधवी शका । अतिच्छत्रा त्ववाक्पुष्पी शताह्वा कारवी स्मृता ॥ सरति प्रतानैरिति सरणा, सरणा तु युक्त पाठः । कटं बिभर्ति कटम्भरा । राज-राजा मुख्या बला बलकृत् । आह च—प्रसारणी तु प्रसरा सरणा सारणा च सा । चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥ १५३ ॥ जायतेऽस्या जन्तुर्जनी । जतु करोति जतूका । सम्यक् स्पर्शोऽस्या संस्पर्शा । आह च—जतुकारी तु जतुकृज्जतुकारी जनी स्मृता । जननी चैव सकर्णी जतूका चक्रवर्तिनी ॥ शटति शटी, षड्ग्रन्थिकैकदेशः षटीति मूर्धन्यादिमिति ॥ १५४ ॥ पलं श्यति पलाशः । आह च—शटी पटी पलाशः स्याच्छ्या पृथक्पलाशिका । सुगन्धमूला गन्धाली षड्ग्रन्था सुव्रता वधूः ॥ कस्य चित्सम्मता पर्णानि कर्चूरस्य पर्ण...पत्र्या कर्चूरं वेत्ति कर्चूरोपादानम् ॥ द्वयर्थे चाह पर्णी गन्धपलाश कर्चूर-श्वेति । कारेण वेल्लति कारवेल्लः । कटि लाति कटिल्लकः, कटुल्लावणौति वा । सुषू सूयते सुषवी । कोलति संस्त्यायते कुलकं, कुत्सितं लवणं आस्वाद्यते वा । पटति सरत्वात्पटोलः । तिक्तो रसेन । पटुर्देहपटुत्व-कृत्, लवणानुसारि इत्येके । आह च—पटोलः कुलकस्तिक्तः पटुकः कर्कशच्छदः । राजीफलः पाण्डुफलो राजिमानमृताफलः ॥ १५५ ॥ कोष्माणानिति, कुत्सितोष्माण्डेषु बीजेष्वस्य वा पित्तकारित्वात्कूष्माण्ड, कुष्यते अमानि तृप्ति वा । कर्कं श्वेतमियर्ति—अरुर्वान्तशाखन सरण चान्कर्कारुः । आ—ईर्षेन—एर्वारु षड्विंशति, उर्वारुकमिव बन्धनादिति श्रुतेः—उर्वारुक स्यादुर्विभिन्नम् । हस्तं कर्कं कर्कटी, प्रागद्यव ... । इष्यत इक्ष्वाकुः, क्षात्रवचनचान्द्रा । कटुका तुम्बी, तुबि अर्दने । आह च—कटुकालाबुनी तुम्बी स(तु)म्बा पिण्डफला तथा । इक्ष्वाकुः क्षत्रियवधनस्त्रिपर्णी महाफला ॥ न लम्बते अलाबूः, काकता-नत्, न लाति वा अन्तर्जलम् । समे इति स्त्रात्वेनापि । अतिविद्धा—अलाबूस्तुम्बक प्रोक्ता जलाग्न्यबूरलाम्बुनी । मण्लाम्बुमहातुम्बीति— ॥ १५६ ॥ गोडुम्बा, अप्रशोष गवाक्षित्वात् । आह च—ऐन्द्र इन्द्रवारुणी द्राक्षा इन्द्रैर्वा स्त्रुपार्णी । गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि ॥ द्वयर्थे चित्रा विशाला द्रवन्ती चेति विशालाचित्रा-त्वात् भ्रान्तो ग्रन्थकृत् । गवाक्षी विशेषो वा विशालेति न दोषः । विशाला महाफलत्वात् । इन्द्रवदर्षैर्वा-र्तान्द्रवारुणी । आह च—अथैन्द्रवारुणी प्रोक्ता विशाला तु महाफला । आनरक्षा चित्रफला तुवसी मधुरी च सा ॥ सूयते प्रेर्यते सूरणः । कन्यतेऽन्विष्यते कन्दः मूलत्वेऽपि । गडति ग्रन्थीनेत्यर्थति गण्डीर, पुंसि । सम्यगष्यो तेऽस्यानि समष्ठिला सान्द्रत्वात्, समष्ठिला नाम शाक, यन्माला—गण्डीरा ना समष्ठिला ॥ १५७ ॥ कश्यवनस्य कशेरी । अपगतोदका जगत्स्वत्वात्, अपोदकमस्वकलेति धन्वन्तरिः ।

कलम्ब्यपोदकाश्री तु मूलकं हिलमोचिका ।
वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ॥ १५८ ॥

सहस्रवीर्याभार्गव्यौ रुहानन्ताथ सा सिता ।
गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः ॥ १५९ ॥

कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ।
स्याद् भद्रमुस्तको गुन्द्रा चूडाला चक्रलोचटा ॥ १६० ॥

वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ।
शतपर्वा यवफलो वेणुमस्करतेजनाः ॥ १६१ ॥

वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।
ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः ॥ १६२ ॥

नडस्तु धमनः पोटगलोथो काशमस्त्रियाम् ।
इक्षुगन्धा पोटगलः पुंभूमनि तु वल्वजाः ॥ १६३ ॥

---

संज्ञित मूल मूलक ,अवदशतेऽप्यस्य शाकत्वं, यो ह्युभयोर्भवति लभते सोऽन्यतरतो व्यपदेशमिति । हिला-द्वीर्याग्मोचयति हिलमोचिका। वसन्त्यस्मिन्गुणा वास्तुकं क्षारपत्राख्यम् । कलम्ब्याद्याः पञ्चैते शाकप्रकाराः, शाकाख्यं पुष्पमूला( पत्रपुष्पा )दीस्तन आरभ्य वा(पृ०७८) यन्माला-मण्डूकपर्णी पालङ्क्या चिञ्चिका चाप्यपोदका । चाङ्गेरी हिल्मोचा च कलम्नी शाकजातय. ॥ दूरं वाति दूर्व्यते वा पशुभिर्दूर्वा ॥१५८॥ भृगोरिय भार्गवी । सहस्रवीर्या बहुपर्वा महाप्रभावा वा। रोहति मूले रुहा । अनन्ता दूरप्रसरणात्, नीलदूर्वेयं, यदाह–नीलदूर्वा स्मृता शष्पं शाद्वल हरिता तथा। शतपर्वा शतवीर्या शतवल्लयसिता रुता ॥ सहस्रवीर्या-नन्ता च दुर्मरा भार्गवी रुहा । गोरिव लोमान्यस्या गोलोमी । आह च– गोलोमी श्वेतदूर्वा च श्वेतगर्भा सिता लता । नीलश्वेतयो पर्यायविपर्यासोऽन्वेष्य । श्वेतदूर्वाविशेषोऽयम् । गण्डैर्ग्रन्थिभिरल्यते गण्डाली । मत्स्याक्षितुल्यग्रन्थि (शकुलाक्षक.)। आह च– गण्डदूर्वा तु गण्डाली तीव्रा मत्स्याक्षिकापि च । वह्नि-नडी कलापश्च वारणी शकुलाक्षक ॥ १५९ ॥ कुरुदेश विन्दति कुरुविन्दः । मेघपर्यायोऽम्बुधरत्वात् । मुस्यति खण्डयति रोगान् मुस्ता, लक्ष्ये त्रिलिङ्गा । गुन्देद्रान्ति रोगा अस्या गुन्द्रा । धन्वन्तरिरभेदेनाह– मुस्तमम्बुधरो मेघो घनो राजकशेरुकः । भद्रमुस्तो वराहोऽब्दो गाङ्गेय कुरुविन्दकः ॥ उच्चटायुत्फलत्यु-च्चा, चकाङ्कोऽयम् ॥ १६० ॥ वन्यते वंशः । त्वचि सरति त्वक्सारः, सृस्थिरे ( सू० ) इति घञ् । (त्वचिसार )तत्पुरुषेकृतिबहुलम् (सू०) इति सप्तम्या अलुक् । कर्म इयर्ति कर्मार । तृणाना ध्वजो मुख्य । यवाभं फलमस्य यवफल । वेणन्ति व( वि )नन्ति वानेन वेणु । मा क्रियतेनेन मस्कर , मस्कर मस्करिणौवेणुपरिव्राजकयो ( सू० )। तेजयति तेजन. । द्वयर्थे तेजन. शरो वेणुश्च ॥१६१॥ कीति चकति कीचक ,कीचेति कायति वा। ग्रन्यते ग्रन्थि । पर्वेति पर्व। पिपर्ति परु.। गुन्द्रो दर्भविशेष हुड , यदाहु – दर्भस्या स्थाने शरै प्रस्तरितव्यम् । तेजयति निशिनोति तेजनक । शृणाति पारुष्याच्छर । काशस्त्विपी-का न॥१६२॥ नडयत्यर्दयति नड , नल गन्धे । धमनोऽन्त सुषिरत्वात्, धमिः सौत्र', यथा धान्तो धान्त धावनस्येन रादि । पोटेन मूलदेश गलति पोटगल । आह च– नलो नडो नडश्च स च पोटगल· स्मृत. । धमनोऽनग्निरन्धोनि नडस्तु शर उच्यते ॥ काशते काश । कोकिलाक्षपर्याय इक्षुगन्धेत्येके । द्वयर्थे पोटगल. काशो नडश्च । वल्न्ते वल्वजास्तृणविशेषा ॥ १६३ ॥ रस्यते रसाल. । इष्यत इक्षु ।

रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ।
स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ॥ १६४ ॥
अभयं नलदं सेव्यममृणालं जलाशयम् ।
लामज्जकं लघुलयमवदाहेष्टकापथे ॥ १६५ ॥
नलादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ।
अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ॥ १६६ ॥
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ।
छत्त्रातिच्छत्त्रपालघ्नौ मालातृणकभूस्तृणौ ॥ १६७ ॥
शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ।
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ॥ १६८ ॥

---

पुण्ड्रदेशजत्वात् (पुण्ड्रः), पौण्ड्रोऽपि । कान्तमुदकमियर्ति कान्तारः, कान्ता अरका भागा अस्य वा । आदिशब्दात्कोशकाराद्याः । आह च– इक्षुः कर्कटको वंशः कान्तारो वेणुनिः सृतः । इक्षुरन्यः पौण्ड्रकश्च रसालः सुकुमारकः ॥ अन्यः करङ्कशालिः स्यादिक्षुयोनीक्षुवालिका । समानं इक्षुगन्धा स्यात्क्षुरः कोकिलाक्षकः ॥ वीरयते वीरणं वीरतरं च तृणभेदः । अस्य वीरणस्य मूलं उशीरम्, काम्यत इत्युशीरम् ॥ १६४ ॥ अभयं रोगहरत्वात् । आह च– उशीरममृणालं स्यादभयं समगन्धिकम् । रणप्रियं वीरतरं वीरं वीरणमूलिका ॥ नलं याति नलदं अभावात्, नलति वा । सेव्यते, एवममृणालमदाहिसम् । जल आशेते जलाशयं, शीतवीर्यत्वाद्वा । लाति दोषान्–ला, ला मज्जासारोऽस्य लामज्जकम् । लघुगुणेन लीयते लघुलयम् । अवल[दी]यते दाहोऽनेनावदाहम् । इष्टं कापथमस्याभोत्रात् इष्टकापथम् । आह च– लामज्जकं सुनालं [वारं] स्यादमृणालं लयं लघु । इष्टकापथकं शीघ्रं दीर्घमूलं जलाशयम् ॥ द्वयमेतन्मृणालं लामज्जकमुशीरं च, तथा सेव्यं लामज्जकमुशीरं चेति । अवदाहमपदत्तमाहुरन्यचोशीरं नरदं, यदिन्दु– अवदत्तं रणप्रियम् । ग्रन्थकृत्तु सेव्यामृणालयोर्नलदोशीरैकार्थ्यमाह भ्रान्तः ॥ १६५ ॥ (नलादयः) तृणजातीया इत्यर्थः । तृण्यतेऽदने पशुभिस्तृणम् । गर्मुच्छ्यामाकौ तृणधान्यविशेषौ । गीर्यते गर्मुत् । श्यामं वर्णमकति श्यामाकः । प्रमुखशब्दान्नीवाराद्याः । तृणगर्मुतौ एकार्थे इत्येके । कौ शेते कुशः । कु(को)थति कुथः । दृणाति पादध्वा दर्भः, दृभ्यते वा । पूयतेऽनेन पवित्रं, सत्यपि तु पवित्रकमिते स्मृतिः । कुत्सितं तृणं कत्तृणं, तृणे च जाताविति (सू॰) कोः कत् ॥ १६६ ॥ पुरे भवं पौरम् । सुगन्धप्रयोजनं सुरभि (सौगन्धिकम्) । ध्यायते पशुभिर्ध्यामं धूमवर्णं च । देवैर्जग्धमिव जग्धत्वात् । यत्र तत्र रोहति रौहिषं, रुहेर्वृद्धिश्च (उ॰) इति टिषच् । आह च– कत्तृणं शकलिर्भूरि भूतिकं रौहिषं ततम् । ध्यामकं भूतकं पौरं सुग्रलं देवजग्धकम् ॥ स्यर्थे सौगन्धिकं नीलदलं कत्तृणं गन्धसारणम् । छत्त्राकारस्तृणविशेषश्छत्त्रा । अतिक्रान्तश्छत्त्रामतिच्छत्त्रः, छत्त्रातिच्छत्त्रमित्येके । पादध्यानसाल्लं हन्ति पालघ्नः । मालाश्चागि तृणान्यस्य मालातृणकः । भुवस्तृणं भूस्तृणः, पारस्करादित्वात् (सू॰) सुट्, भूरस्तृणं वा । आह च– भूस्तृणो रोहिणो भूतिर्भूमित्रोथ कुटुम्बकः । मालातृणश्च पालघ्नश्छत्त्रातिच्छत्त्रकस्तथा ॥ १६७ ॥ शस्यते शष्पं, शसु हिंसायाम् । बालं नवं तृणम् । घस्यतेऽदने घासः । यूयते यवसं तृणजातिः । अर्ज्यतेऽर्जुनं, सर्वं च तृणमर्जुनमिति भागुरिः । (तृण्या) पाशादिभ्यो यः (पाशादिभ्यो यः) । (नड्या) नडसमूहः ॥ १६८ ॥ तृणाच्छादनकरणसमूहकार्ये समुच्चयम् । इति

ऋक्षाच्छभल्लभल्लूका गण्डके खड्गखड्गिनौ ।
लुलायो( पो ) महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥

स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः ।
सृ( शृ )गालो वञ्चकः क्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥

ओतुर्विडालो मार्जारो वृषदंशक आखुभुक् ।
त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ६ ॥

श्वाविन्तु शल्यस्तल्लोम्नि शलली शललं शलम् ।
वातप्रमीर्वातमृगः कोक ईहामृगो वृकः ॥ ७ ॥

मृगे कुरङ्गवातायुहरिणाजिनयोनयः ।
ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥

कदली कन्दली चीनश्चमूरुप्रियकावपि ।
समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥

---

हिनस्ति भल्लुकः, लक्ष्ये तु ( भल्लूकः ), दधति कुहरभाजामत्र भल्लूकयूनामिति ( उ० राम० ) । ऋक्षति ( ऋष्णोति ) ऋक्षः । अच्छ आभिमुख्येन भलति(ते) अच्छभल्लः, अच्छेत्याभिमुख्यार्थेऽव्ययम् । भालयति० ( ते ) भाल्लुकः । भल्लकोऽपि । गण्डति सहन्यते गण्डकः । खडति भिनत्ति खड्गः । खड्गं शृङ्गमस्यास्तीति खड्गी । वार्ध्रीणसोऽपि । लुलति पङ्के लुलायः । महति मह्यते शैने वा महिषः । महोऽपि । वाहं हयसमूहं द्वेष्टि वाहद्विषत्, द्विषोऽमित्रे ( सू० ) इति शतृप्रत्ययः । वाहद्विषन्नित्येके । घर्मार्तः कं जलमासरति कासारः, ईषत्सरति वा महाकायत्वात् । सीरिभिर्दान्तैर्भाति सीरिभः कुटुम्बी तस्यायं सैरिभः । रजस्वलोऽपि ॥ ४ ॥ शिनोति शिवा, शकुनावेदिनी वा, शृगालेऽपि स्त्रीलिङ्गः, यच्छाश्वतः– शिवः कीलः शिवा क्रोष्टा भवेदामलकी शिवा । गां मिनोति मीनाति वा गोमायुः । मृगान् धूर्वति मृगधूर्तः । असृगालाति सृगालः, सरति सृजति वा । क्रोशति क्रोष्टा । फे– इत्यव्यक्तं रौति फेरुः फेरवश्च । जमति जम्बुकः सर्वभक्षत्वात् । फेरण्डोऽपि ॥५॥ अवत्याखुभ्य ओतुः । बिशन्– आलात्यासून् विडालः, बिलालो वा, बिलान्यरति पर्याप्नोति वा, बिलति भिनत्ति– अत्वास्वा, बिड् आक्रमस्याङ्गुविस्ताद्वा, बिड आक्रोश इत्यस्माद्वा । आखुभ्यो गृहं मार्ष्टि मार्जारः । वृषानाखून्दशति वृषदंशः । जलेशयादन्या निलेशाया गोधेयम्, थद्वेगोधायां जातो जात्यन्तरमित्येके । ( गौधेर इ० ) गोधायाढ्रक् ( सू० ), आरगुदीचाम् ( सू० ), शुभ्रादित्वाड्ढक् ( सू० ) ॥ ६ ॥ श्वानं विध्यतीति श्वावित्, नहिवृतिवृषिव्यधीति ( सू० ) दीर्घः । शलति शल्यानि किरति वा शल्यको दिदेशयः । शलको[ लो ]ऽपि । तस्य लोम्नि शलाकाख्ये, यन्मालाभाविच्छलाकाः शलली, शल गतौ । वातं प्रमिमीते ( वातप्रमीः ), वाताभिमुखधावनात् । कोकते गृह्णाति कवते याति वा कोकः । ईहा मृगस्येवास्य ईहामृगः, ईहां मृग्यते वा । ईहां वर्तते– ईहावृक एवैकदेशेन वृक इत्युक्तः । आरण्यः श्वेत्येके । वृक वृक आदाने ॥ ७ ॥ मृग्यते व्याधैर्मृगः । कौ रङ्गति कुरङ्गः । वातमयते वातायुः, वानं शुष्कमयते वानायुरित्येके । ह्रियते गीतेन हरिणः । अजिनस्य योनिः । ( ऐणेयं ) विकारेऽवयवे वा, एण्याढञ् ( सू० ) । ( ऐण ) विकारादौ, प्राणिरजतादिभ्योऽञ् ( सू० ) । ऐणेयमैणं च वाच्यलिङ्गौ ॥ ८ ॥ के दलति कदली, कन्दे लीयते कन्दली, इमन्ती । चिनोतीति चीनः । चमति चमूरुः । प्रीयते प्रियकः । समूर्य( र्च्य )ते समूरुश्चित्रवर्णः । एते चर्मस्वप्युक्ताः ॥ ९ ॥ अमी

व्याघ्राटस्तु भरद्वाजः खञ्जरीटस्तु खञ्जनः ।
लोहपृष्ठस्तु कङ्कः स्यादथ चाष किकीदिवि( वः ) ॥ १६ ॥
कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः ।
दार्वाघाटोऽथ सा( शा )रङ्गः स्तोककश्चातकः समाः ॥ १७ ॥
कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १८ ॥
चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः ।
पुमपत्ये चाटकेरः स्त्र्यपत्ये चटकैव सा ॥ १९ ॥
कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ ।
वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥ २० ॥
काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २१ ॥
द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः ।
आताये( यि )चिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ २२ ॥

---

राव्य । खञ्जतीति खञ्जन । लोहवर्णं पृष्ठमस्य । कङ्कते कङ्क । चषति चष । किकीति दीव्यति, वाशने किकीदिविः, द्वे नामनी इत्येके, किकिदीविरित्यन्ये ॥ १६ ॥ के लिङ्गं चिह्नमस्य कलिङ्ग । भृङ्गवत्कृष्णपक्षा ( भृङ्ग ) । धूमवानिवाटति धूम्याट, धूम आटश्च पदैकदेशत्वात् । शतं बहूनि पत्राणि पक्षा अस्य शतपत्र । दारूणि हन्ति दार्वाघाट, दारुघाहनोऽणन्तस्य च टः संज्ञायाम् ( वा० ) । सरति सारङ्ग, सह- शारङ्ग इति वा पूर्वपा( चा )ठात् । स्तोकं कायति वाशने याचने वा स्तोकक । चतति( ति ) याचते चातक । जलरवोऽपि ॥ १७ ॥ कृकेण शिरोग्रीवेण वक्ति कृकवाकु । कुगुच्चारणेन कुटति कुक्कुट । शिखं कालज्ञश्च ॥ १८ ॥ चटति भिनत्ति- आहारं चटक । कं शिरो धुनाति चलयति कलविङ्क । ( चटका ) अजाद्यतष्टाप् ( सू० ), भिक्षुदितामनः ( शिपकादेराच ) । ( तयो ) चटकस्य चटकायाश्चापत्यं पुमान्- चाटकैर, चटकाया एरक् ( सू० ), चटकेऽनुपमत्वात् ( चटकस्येति वा क्षम् ) । स्त्री च तदपत्यं च तत्र, स्त्रियामपत्ये लुगावक्तव्य ( वा० ), लुक्तद्धितलुकि ( सू० ) इति टापो लुक्ताः पुनष्टाप् ॥ १९ ॥ कर्कति रटते । केति च रटते वाशने ( करेटु ) । कृ इति कणति कृकण नयति वा कृकण । क्रमिति करोति वाशते क्रकरः । परभृत काकेन पुष्टत्वात् । कोकते शब्दं गृह्णाति कोकिल । आपिकायति पिक । कलकण्ठश्चास्य ॥ २० ॥ काकेति कायति शब्दे वा लैल्यात्काक । करति रटते करट । नास्ति रिष्टं हिंसास्यामृतभुक्त्वादरिष्ट । बलिभि पुष्टो वैश्वदेवभागहर( गर्हं )णाद् बलिपुष्ट । सकृत्प्रजायते सकृत्प्रज, एकगर्भत्वात् । ध्वाङ्क्षते ध्वाङ्क्ष । आत्मन स्वनाम्नो घोषो शब्दोऽस्यात्मघोष, काकेति वाशनात् । परान् पिकान् बिभर्ति परभृत् । वय एव वायस, प्रज्ञादिभ्यश्च ( सू० ), वयते वा । एकाक्षि चिरजीवी मौकुलिरित्यन्ये ॥ २१ ॥ ( द्रोणकाक ) वृद्धकाकच्छिकाको वा, यदाह - द्रोणकाको वनकाको वृद्धकाको वनाश्रय, दुष्ट हिंसका, द्रोणोऽपि । द्वितीय तृतीयं वा रूपं वहति दिलिखात्, तस्य नय दात्यूह, दैत्यिकादीत्येकत्वात् ( सू० ) । कण्ठ कण्ठेऽस्य काल कण्ठस्य रोमेन्द्रिका धवत्र कालकण्ठ कालकण्ठक । जलरङ्को( को )पि । गिद्धा- वर्णविशेष गन्धविशेष । अतामदनर्णा । चिल्यति चिल्ल, चिल शैथिल्ये । दक्षते दक्षाय्य, श्रुदक्षिस्पृहि- गृहिभ्य आय्य ( उ० ), तनोर वेडश ( तद्देवत्यम् ) । गृध्यति नाउ गृध्रः । कीं गूढं कीति रौति कीर । शुकौ नरथात्, गमने चेष्टे । प्रियदर्शनोऽपि ॥ २२ ॥ शुकते शुक् । ( क्षेत्र ) प्रग्रन्दित्यदः ( सू० ).

कुङ् क्रौ( क्रु )ञ्चोथ वकः कह्व पुष्कराह्वस्तु सारसः।
कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २३ ॥
कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ।
हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकस. ॥ २४ ॥
राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिता।
मलिनैर्मल्लिकाक्षा( ख्या )स्ते धार्तराष्ट्राः सितेतरैः ॥ २५ ॥
शरारिरातिराटि( डि )श्च बलाका बिसकण्ठिका।
हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा ॥ २६ ॥
जतुकाजिनपत्त्रा स्यात्परोष्णी तैलपायिका।
वर्वणा मक्षिका नीला सरघा मधुमक्षिका ॥ २७ ॥
पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका।
दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः ॥ २८ ॥
भृङ्गारी चीरुका चीरी झिल्लिका च स्त्रियामिमाः।
समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गण ॥ २९ ॥

स्त्रियामजादित्वात्क्रौञ्चा। वक्ति वक, न्यङ्क्वादि ( सू० )। वकोऽपि। केन के जल वा ह्वयते कह्व। सरति मत्र सारसा लक्ष्मणाह्वय। विलीनाङ्गो दीर्घजङ्घश्च। कोकते वाशत कोक। चकत चकः। चक्रेति वाक्- आख्यास्य चक्रवाक। रथाङ्ग चक्रमाह्वयो नाम चास्य रथाङ्गाह्वयो रथाङ्गनामा च ॥ २३ ॥ कदम्बस्याय सघचारित्वात्कादम्ब। कलो मधुरवाग्हस ( कलहस )। उच्चै क्रोशत्युत्क्रोश। कुरति कुरर, कुर शब्दे, कुरेति शब्द राति वा। हन्ति गच्छति हस। श्वेता गरुत पक्षा अस्य श्वेतगरुत्। चक्राकाराङ्गो वृत्तत्वात्, चक्राङ्क इत्येके। मानसाख्ये देवसरस्योकोस्य मानसौका ॥ २४ ॥ चञ्चु- सहितैश्चरणैरिति लक्षणे तृतीया। मलिनैश्चञ्चुचरणैस्ते सिता मल्लिकाक्षा, [ मल्लिकाकाराक्षा ] शुक्लापाङ्- गत्वात्। कृष्णैश्चञ्चुचरणैर्धृतराष्ट्र- अमात्ये भवा धार्तराष्ट्र, राजहसन्यो न्यूनत्वात् ॥ २५ ॥ शृणन्त्येना शरारि। अतत्याति। अटत्याटि। एता स्त्रियाम्, बलाद्धकान् कायति बलेनाकति याति वा बलाका। बिसमिव कण्ठोस्या, बिसकण्ठिकेत्येके। शारिका गोराटी पीतपादेति च वाच्यम्। व्रियते वरटा, स्त्रीवि- षयत्वाज्जातेर्ङीष् नास्ति, वरलापि। याषिदित्येव, लक्ष्मणीत्येके, अत एव लक्ष्मणाख्योसौ ॥ २६ ॥ जतुरिव कृष्णपिङ्गलत्वाज्जतुका। अजिन पत्त्राणि पक्षा अस्या अजिनपत्त्रा चर्मवटकत्वात्। परमुष्ण- त्वमस्या शीतापहतत्वात्, परं विरुद्ध वा तेजसोऽन्धकारात् ( पराष्णी )। तैल पिबतीति तैलपायिका, तैलाख्या-'अजिनपक्षत्वात्। मुखविष्ठा वल्गुलिका निशा- नित्यमात्यन्तिकाभासात्। चतु सञ्ज्ञे( ज्ञा )यरे, तैलाख्या- टनी च। वृणोति वर्वणा। मक्षन्ति रुध्यन्त्यस्यै मक्षिका। सरन्ती घातयन्ति सरघा ॥ २७ ॥ पतति- अपतङ्गति वा पतङ्गिका। पुत्कुत्सित तनोति पुत्तिका, मधुमक्षिकाभेदोय, यन्निमि - माक्षिक तैलवर्ण स्याद् घृतवर्ण तु पौत्तिकम्। भ्रामर तु भवेच्छुक्ल क्षौद्र तु कपिल भवत् ॥ दशति दश। (दशी) दशजातीया, जातेरिति ( सू० ) ङीष्। गन्धयतेऽर्दयति गन्धोली, गन्धा अत्येके। वृणोति वरटा तैला- ख्यका ॥ २८ ॥ आकृत्या भृङ्गमियर्ति भृङ्गारी। चीति रौति चीरुका। चीति रिणाति चीरी। झिल्ली वाद्यभेदस्तत्तुल्यशब्दा झिल्लिका चकाराद्या, केऽण ( सू० ) इति ह्रस्व, झिल्लिकार्तिं( झा )कृती- नामिति तु लक्ष्यम्। शलति शम लभत वाग्नौ शलभ। खे द्योतते खद्योत। ज्योतिषेङ्गति चलति ज्योतिरिङ्गण। इन्द्रगोपको ज्योतिर्माली कीटमाणिक्य च [-माणश्च ] ॥ २९ ॥ मधु व्रतयति भुङ्क्ते

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ ३० ॥
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ ३१ ॥
केका वाणी मयूरस्य समौ चन्द्रकमेचकौ ।
शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ ३२ ॥
खगे विहङ्गविहगविहंगमविहायसः ।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३३ ॥
पतत्रि(त्रि)पत्त्रिपतगपतत्पत्त्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्त्रयः ॥ ३४ ॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।
तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३५ ॥

---

मधव्रत । अन्त्यलोपः, अलिश । द्वौ रेफौ नाम्न्यस्य द्विरेफ । भजति बिभर्ति वा भृङ्गः । षट् पदानि चरणा अस्य षट्पद । भ्रमति भ्रमर । चञ्चरीकभसल(ने)न्दिन्दिरोलम्बा देश्याम् ॥ ३० ॥ मीनाख्यहीन् मयूरः । बर्हमस्यास्ति (वाहण), फल्बर्हाभ्यामिनन् (वा॰) । शिखास्त्यस्य शिखावल, दन्तशिखात्संज्ञाया (सू॰) वलच् । शिखा, व्रीह्यादित्वात् (सू॰) । मेघनादमनुलसति नृत्यति— अवश्यं मेघनादानुलासी । चन्द्रकी शुक्लापाङ्गश्च ॥ ३१ ॥ के मूर्ध्नि कायति केका । चन्दतिश्चातिचन्द्रकः । मेचको मिश्रवर्णत्वात्, यत्कात्य — बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधा । मयूरस्यैवेव, अन्यनोपचारात् । शिखामर्दयति शिखण्ड । पिच्छ(य)ति पिच्छम् । बर्हति नृत्येनोर्ध्वीभवति बर्हम् । प्रचलाकोऽपि । कलापो नानार्थ ॥ ३२ ॥ खे गच्छति खग, अन्यत्रापि दृश्यते (वा॰) इति ड । विहायसा गच्छति, गमे सुपि वाच्यः (वा॰) खच् वक्तव्य, विहायसो विहादेशः (वा॰) डे, खच् डिद्वा (वा॰) । जिहीते विहाया, यच्छाश्वत— विदुर्विहायसं व्योम पक्षिणश्च विहायस । शक्नोतीति, शकेरुनोन्तोन्युनय (उ॰) । पक्षा सन्त्यस्य पक्षी । द्विर्जायत इति द्विज ॥ ३३ ॥ पतत्राणि विद्यन्ते येषु ते पतत्रिण । पतन्त्यनेनेति पत पक्ष, पुंसि संज्ञायां घ (सू॰), पतेंगच्छति पतग । पतति पतन् । पत्त्राणि पक्षा रथोऽस्य पत्त्ररथ । नग— ओकोऽस्य नगौकाः । वाजो वेगोऽस्यास्तीति वाजी । विकिरति भक्ष विकिर— विष्किर, विष्किर शकुनिर्विकिरो वा (सू॰) । वाति वयति वा वि, वेतादित् (उ॰) । पतत्राणि सन्त्यस्य पतति वा पतत्री, पतेरत्रिन् (उ॰), पतेरत्रिरिति भाष्या पतत्रि मन्यन्ते ऽदिदन्त मन्यते ॥ ३४ ॥ पतितुमिच्छन् पित्सन्, सनिमीमेति (सू॰) इस्— इस्याधलोपो । नभसा गच्छति नभङ्गम, गमे सुप्युपसंख्यानात् खच् (वा॰), वाचयमपुरन्दरौ च (सू॰) इति चकारान्मागम, अत्यविचमितमिरमिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् जिति (उ॰) नभ (भस) नस्रोस्त्रीव्रक्के । पतङ्गो नानार्थे । एते पक्षिविशेषाः । हरिं वर्णमितो हारीत । मज्जति मद्गुः जलकाक, न्यङ्क्वादि (सू॰) । काण्डे मद कारण्ड पक्षरश्च वाति कारण्डव । प्लवते प्लव ॥ ३५ ॥

तित्तिरि कुक्कुभो लावा जीवजीवश्चकोरक ।
कायष्टिह्टिभ काक ककरो( वर्तका ) वर्त( र्ति )कादय ॥ ३६ ॥
गरुत्पक्षच्छदा पत्त्र पतत्त्र च तनूरुहम् ।
स्त्री पक्षति पक्षमूल चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३७ ॥
प्रडीनोड्डीनसडीनान्यता खगगतिक्रिया ।
पेशीकोशो द्विहीनण्ड कुलायो नीडमस्त्रियाम् ॥ ३८ ॥
पात पाकार्भको डिम्भ पृथुक शावक शिशु ।
स्त्रीपुसो मिथुन द्वन्द्व युग्म तु युगल युगम् ॥ ३९ ॥
समूहनिवहव्यूहसदोहविसरव्रजा ।
स्तोमौघनिकरव्रातवारसघातसचया ॥ ४० ॥
समुदाय समुदय समवायश्चया गण ।
स्त्रिया तु सहतिर्वृन्द निकुरम्ब कदम्बकम् ॥ ४१ ॥
वृन्दभेदा समर्वर्ग सघसार्थौ तु जन्तुभि ।
सजातीयै कुल यूथ तिरश्चा पुनपुसकम् ॥ ४२ ॥

---

तित्तिशब्द राति तित्तिरि । कुक्कशब्द कराति (भ षते) कुक्कुभ । लाति [ लावयात ] लूयन वा लाव । नावेन सहचरण नीवति नीवनीर बाहुलकाखच । चकन( ात ) ज्यात्स्नया तृप्यति चकार । भाका यजति कायाष्ट शिखरी । ि ट्टिन्द भ षन ि दृभ । कुकने [ काकत ] काक । कात कराति ककर । वतत इत ( वतक ) वतकान्वुनौप्र चा ( वा० ) इति म धु पक्ष वर्तिका । आदिशब्दा त्त्व पञ्जल दय ॥ ३६ । गिराति स गरुत् । ( पक्ष ) पथ परिग्रह । छ द्यतनेनाङ्ग छद, छादर्षे ( सू० ) इति ह्रस्व । पतत्यनन पत्त्रम् । पनन्त न यत पत त्रम । मल पक्षात्त ( सू० ) । चञ्चति चलति चञ्चु । त्रुट्यति त्रोटि । तुण च ॥ ३७ ॥ प्रकृष्टमूर्ध्वं सहत वा डयन स्वान्यओ न्त ( ग० सू० ) ( आदितश्च ) इति निष्ठानत्वम् । एना इति दि डानाद्यपलक्षणथ । पशीना मासखण्डाना कोश । अमति न सरयस्मन्दण्डम् । तस्य सज्ञा इत गौंडा । का लीयत कल्यत कुल्मति वा कुलायः । निलीयत स्मन् नाड ॥ ३८ ॥ पुनाात पात । प च्यन पवति स्तनौ वा पाक । ऋभ्यत( अर्यते ) श्राद्ध प्राप्यतऽर्भक । डयति( त ) डिम्भ । प्रथत वधत पृथु कायत वा पृथुक । श्यात शवति वा शावक । शिनाात स्नहन शत वालार्थं शिशु । स्त्री च पुमाश्च स्त्रीपुमौ अचतुरविचतुरति ( सू० ) साधु । मथत सगच्छते मिथुनम् मिथृमधृ सगमन । द्वन्द्वमिति द्वन्द्वरहस्यमर्यादात ( सू० ) साधु, यत्कालिदास द्वन्द्व नि भ व क्रियया विवृ । युज्यते धामवृत्या युगम् । धमवृत्तौ तु युग लाति युगल मत्वर्थाया वा लच ( सि म ादभ्यश्च ) । ३९ ॥ समूह्यत ऐक्यत समूह । निवहति निवह । व्यूह्त व्यूह । सदुह्यत प्रपूयत सदोह । विस्त्रियत विसर । व्रज्यत व्रज गाचरसचरवहव्रजेत ( सू० ) साधु । स्तयत स्ताम । आह्वत ओघ न्यङ्क्वादि ( सू० ) । निकीर्यत निकर । व्रियते वार । सहन्यत सघात होहन्तार त ( सू० ) घ । सच यत सचय ॥ ४० ॥ समुदयन समुदाय अयत चय । शसुन्य दणाऽन्त । समवयत समवाय । चायत चय । गण्यत गण । वृणाति वृन्दम् । निकुरति निकुरम्बम् । कदम्बमातङ्कात कसरसचया मकवान् ( कदम्बकम् ), कुत्सितमम्बते वा ॥ ४१ ॥

पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ।
स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४३ ॥
कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।
गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ॥ ४४ ॥

इति सिंहादिवर्गः । ५ ।

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥
स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥
विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥

---

समूहविशेषा वक्ष्यन्त इति शेषः । सजातीयैः प्राणिभिरप्राणिभिश्च समूहो वर्गः, वृज्यते विजातीयेभ्य इति । प्राणिभिः समूहः ( संघः ), संहन्यते संघः, संघोद्घौगणप्रशंसयोः ( सू० ) इति साधुः, यथा गोसंघः, मेघसंघादुपचारात् । सरति सार्थोऽश्वगवृन्दम् । जन्तुभिरित्येव, कुल सस्त्याने बन्धुषु च, (यथा) विप्रकुलम् । वृन्दमित्येव, यथा मृगयूथः, यु मिश्रणे ॥ ४२ ॥ संवीयते समजः, समुदोरजःपशुष्विति ( सू० ) अप् । पशुभ्योऽन्येषां वृन्द ( समाजः ), यथा श्रोत्रियसमाजः । ( सधर्मिणा ) समूह इत्येव, यथा श्रमणनिकायः, निचीयते निकायः, निवासचितिशरीरोपसमाधानेष्वादेश्च कः ( सू० ) घञ् कत्वं च । धान्यादेरुच्छ्रित वृन्द, पुञ्ज्यते पुञ्जः पूर्यते वा । रश्यते राशिः, रशि सौत्रो दीप्त्यर्थः । उत्कीर्यते उत्करः । कुट्यते कूटः ॥ ४३ ॥ कपोतादिसमूह एतानि वर्तन्ते, अनुदात्तादेरञ् ( सू० ) । आदिशब्दात्काकादि । छायन्ते छेकाः पञ्जरादौ स्थाप्यन्ते । गृह्यन्ते गृह्यकाः, पदास्वैरीति ( सू० ) क्यप्, स्वार्थे कन् ॥ ४४ ॥ इति सिंहादिवर्गः । ५ ।

मनोरपत्यं मनुष्यो मानुषश्च, मनोर्जातावञ्यतौ षुक् च ( सू० ) । म्रियते मर्त्यः, स्वार्थे यत् । मानवः, तस्येदमर्थेऽण्, अपत्यार्थे अञ्यद्भ्यां बाधितत्वात् । नृणाति नरः, नॄ नये । पाति पुमान् । पञ्चभिर्भूतैर्जातः पञ्चजनः । पुरि पुरि शयनात्पूरणाद्वा पुरुषः । ( पूरुषः ) अन्येषामपीति ( सू० ) वा दीर्घः । नयति ना, नयतेर्डिच्च ( उ० ) इति ऋः ॥ १ ॥ स्त्यायत्यस्यां गर्भः स्त्री । यौति पुंसा ( योषति ) योषित्, हसृरुहियुषिभ्य इतिः ( उ० ) । युष्यते( योष )त्यन्यं यौति वा योषा । नरीति, नृनरयोर्वृद्धिश्च ( ग० सू० ) इति शार्ङ्गरवादिपाठान्ङीन् । सीमन्तः केशवेशोऽस्त्यस्याः सीमन्तिनी । उह्यतेऽसौ भर्त्रा, वध्यतेऽनया भर्ता वा वधूः । प्रतीपं वक्रं पश्यति, धर्मादनुशीलनात् । वामा विपरीतलक्षणया सुन्दरत्वेदनाद्वा । वनति भजति वनिता । मह्यते महिला । दयावान्महेलापि, यदाह्यम्– अजयद् द्विरदः शासनयः परमहेलया । स्वप्नेऽपि मनसि स्पृशो न यः परमहेलया ॥ २ ॥ प्रशस्तान्यङ्गान्यस्या अङ्गना, अङ्गात्कल्याणे ( ग० सू० ) इति पामादित्वान्नः ( लोमादिपामादीति ) । बिभेति तच्छीला भीरुः, भियः क्रुक्लुकनौ ( सू० ) । कामयते कामिनी । वामे चापके लोचने अस्या वामलोचना । प्रकृष्टो मदः कामवेगोऽस्याः प्रमदा । मानः प्रणयकोपोऽस्या मानिनी । काम्यते कान्ता । लडति ला–( ल )ल्यते वा ललना, लड विलासे, लल ईप्सायां वा । नितम्बिनी गुरुनितम्बा ॥ ३ ॥ विशेषा

सुन्दरी रमणी रामा कोपना सैव भामिनी ।
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ ४ ॥
कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः ।
पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥
भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।
पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥
कृतसापत्न( त्नि )काध्यूढाधिविन्नाथ स्वयंवरा ।
पतिंवरा च वर्या च कुलस्त्री कुलपालिका ॥ ७ ॥
कन्या कुमारी गौरी तु नग्निकानागतार्तवा ।
स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ८ ॥
समाः स्नुषा जनी वध्वश्चिरण्टी तु सुवासिनी ।
इच्छावती कामुका स्याद् वृषस्यन्ती तु कामुकी ॥ ९ ॥

---

इत्येव । सुष्ठु– आद्रियते सुन्दरी । रमन्तेऽस्यां रमणी । रमते रामा, ज्वलादित्वाण्ण ( सू० ) । कुप्यति तच्छीला कोपना, क्रुधमण्डार्थेभ्यश्च ( सू० ) इति युच् । भामिनी, भाम क्रोधे । उत्तमा स्त्रीपर्यायाः । आरोहन्त्यस्मिन्नारोहो नितम्बः, स वरोऽस्या वरारोहा । मत्ता इवेश काशते भाति मत्तकाशिनी, कर्त्र्युपमाने ( सू० ) णिनिः । वरो वर्णोऽस्या वरवर्णिनी ॥ ४ ॥ नृपस्त्रीस्त्रैव । श्रीमहादेवीत्वे कृताभिषेका, यथा वासवदत्ता, मह्यते पूज्यते महिषी । पद्मावत्याद्याः, भोगोऽस्त्यासां भोगिन्यः । पत्युर्नो यज्ञसंयोगे ( सू० ) इति पत्नी । पाणिर्गृहीतोऽस्याः, बहुव्रीहेश्चान्तोदात्तात् ( सू० ) इत्यत्र पाणिगृहीतीत्यादिना ( वा० ) विशेष इति ङीष् । द्वितीया धर्मसहाया । सह धर्मोऽस्त्यस्याः सहधर्मिणी, यज्ञादौ सहाधिकारात् ॥ ५ ॥ भरणीया भार्या, ऋहलोर्ण्यत् ( सू० ) । जायतेऽस्यां पतिर्जाया, यन्मनुः– जायायास्तद्धि जायात्वं यदस्यां जायते पुनः । दारयन्ति दाराः, दारजारौ कर्तरि णिलुक्च ( वा० ) । अथशब्दात्पुंभूम्नोर्न पूर्वभावत्वम् । सहचरी च । कुटुम्बं पुत्रभृत्याद्यस्त्यस्याः कुटुम्बिनी । पुरं धत्ते पुरंध्री । पतिसेवैव व्रतं यस्याः सा पतिव्रता, यत्स्मृतिः– नास्ति स्त्रीणां पृथग्यज्ञो न व्रतमिति ॥ ६ ॥ कृतं सापत्नकं सपत्नीभावोऽस्याः ( कृतसापत्नका ) । अध्युपर्यूढ्यते द्वितीया( अन्या )स्त्री अध्यूढा । अधिविन्दत्यस्यामधिविन्ना । स्वयं वृणीते स्वयंवरा, मन्यायाभृन्त्विजाति ( सू० ) खच् । पतिं वृणुते पतिंवरा, खच् । व्रियतेऽनया वर्या, अवद्यपण्येति ( सू० ) साधु, वरमर्हति वा । कुलस्य संपादयित्री स्त्री ( कुलस्त्री ) ॥ ७ ॥ कनति कन्या, कनी दीप्तौ, अघ्न्यादिः ( उ० ), कन्यायाः कनीनच ( सू० ) इति लिङ्गाद् ङीप्– नास्ति । कुमारयति क्रीडति कुमारी कुत्सितो मारोऽस्या वा, अनूढत्वात् । अष्टवर्षा भवेद् गौरी दशमे नग्निका भवेदिति स्मार्तो विशेषो नास्ति । गौ( गु )रते गौरी । नजते नग्ना, ओणजी ओलजी व्रीडे । स्त्री नग्नमानैव रजः । ( मध्यमा ) अजाद्यतष्टाप् ( सू० ) । ( तरुणी ) वयसि प्रथमे ( सू० ) इति ङीप् स्यात्, नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ( वा० ) वा ङीप् । ( युवतिः ) यूनस्तिः ( सू० ) ॥ ८ ॥ स्नौति स्नुषा । जायतेऽस्यां जनी । वधूरी च ग्रामटिकावत् । चिरिणोति चिरिण्टी, चरति चरण्टीत्येके, वयस्यचरमे ( वा० ) इति ङीप् । सुष्ठु वसति सुवासिनी, स्ववासिनीति द्रवि[ मि ]डाः । ( कामुका ) लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ( सू० ) । वृषमिच्छति, सुप आत्मनः क्यच् ( सू० ), अश्ववृषयोर्मैथुनेच्छायामिति ( वा० ) असुक् । आन्यदङ्गमति ( सू० ) मैथुनेच्छायां ङीप् कामुकी ॥ ९ ॥ मञ्जुरतः– हित्वा लज्जाभये श्लिष्टा मदनेन

कान्तार्थिनी तु या याति संकेतं साभिसारिका ।
पुंश्चली चर्षणी बन्धक्यसती कुलटेत्वरी ॥ १० ॥
स्वैरिणी पांशुला च स्यादशिश्वी शिशुना विना ।
अवीरा निष्पतिसुता विश्वस्ताविधवे समे ॥ ११ ॥
आलिः सखी वयस्या च पतिवत्नी सभर्तृका ।
वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ॥ १२ ॥
शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ।
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥
अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ।
उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः ॥ १४ ॥
आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ।
उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥

---

मदन च । अभिसारयते कान्त सा भवेदभिसारिका ॥ ण्वुलन्तोयं ( अभिसारिका ) । वासकसज्जा विरहोत्कण्ठिता खण्डिता विप्रलब्धा कलहान्तरिता तथा प्रोषितभर्तृका स्वाधीनपतिकेत्यन्या अष्टाव्यर्थन्वाभ दर्शिताः । पुमांस चलयति पुंश्चली । चर्षति चेतश्चर्षणी, कृपेरादेशश्च: ( उ० ) । बध्नाति बन्धकी । कुलान्यटति कुलटा शकन्ध्वादिः ( वा० ), कुटिमतं लटतीत्येके । एति तच्छीला— इत्वरी चपला, इण्नशजिसर्तिभ्यः क्वरप् ( सू० ) ॥ १० ॥ स्वेनेर्ते तच्छीला स्वैरिणी, स्वादीरेरिणो: ( वा० ) इति वृद्धिः । पांशुर्मालिन्यहेतुरस्त्यस्याः पांशुला । ( अशिश्वी ), सख्यशिश्वीतिभाषायाम् ( सू० ) इति साधु । न विद्येते वीरौ पतिपुत्रावस्या अवीरा । विश्वसिति स्म विश्वस्ता । विगतो धवो भर्तास्या विधवा ॥ ११ ॥ अल( आलय )त्यालिः, यच्छब्दाभ्यन्त:— आलि सखी सेतुरालिरालिरावलिरिष्यते । समानं ख्याति सखी । वयसा तुल्या वयस्या, नौवयोधर्मेति ( सू० ) यत् । सध्रीची च । ( पतिवत्नी ) अन्तर्वत्पतिवतोर्नुक् ( सू० ), ङीप् च । ( पलिक्नी ) असितपलितयोर्न ( वा० ), छन्दसिक्नमेके ( वा० ), भाषायामपीष्यत इति ङीप् च । प्रजानातीति प्रज्ञा, इगुपधेतिकः ( सू० ) । ( प्राज्ञी ) प्रज्ञादिभ्यश्चेति ( सू० ) स्वार्थेऽण् । प्रज्ञास्त्यस्याः (प्राज्ञा), प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ( सू० ) ॥१२॥ (शूद्री) पुंयोगादाख्यायाम् ( सू० ) इति ङीप् । शूद्रजातीया स्त्री शूद्रा, शूद्रा चामहत्पूर्वा जातिः ( वा० ) इति— अजादित्वात् टाप् । आभीरजातीया महाशूद्रस्य स्त्री च, जातिलक्षणे पुंयोगे च ङीप् । वैश्यभेद एवाभीरो गवाद्युपजीवी । अन्यत्र महती चासौ शूद्रा च महाशूद्रा ॥ १३ ॥ स्वयं पुंयोगं विना । अर्यक्षत्रियाभ्यां वा स्वार्थे ( वा० ) इति ङीपानुकौ, पक्षे टाप्, योपधत्वाज्जातिलक्षणो ङीप्— नास्ति । स्वयमित्येव । उपेत्याधीयतेऽस्याः, अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ( वा० ) इति घञ् वा च ङीष् । स्वयं मन्त्रव्याख्यातृत्वादाचार्या । स्वतो जातावित्यर्थः, योपधत्वाज्जातेर्ङीष्—नास्ति ॥ १४ ॥ ( आचार्यानी ) इन्द्रवरुणेति ( सू० ) ङीषानुकौ आचार्यादणत्वं चेति वक्तव्यम् ( वा० ) । पुंयोग इत्येव, ( उपाध्यायानी ) उपाध्यायमातुलाभ्यां वेति ( मातुलोपाध्याययोरानुग्वा ) पक्षे ङीषानुकौ । पुट सञ्श्लेषणे, उभयलक्षणा पोटा नपुंसकाख्या ॥ १५ ॥

वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ।
जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥
स्त्री नग्निका कोटवी स्याद् दूतीसंचारिके समे ।
कात्यायन्यर्धवृद्धा या का( क )षायवसनाधवा ॥ १७ ॥
सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।
असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी ॥ १८ ॥
वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः ।
सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे ॥ १९ ॥
विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला ।
स्त्रीधर्मिण्यपि चात्रेयी मलिनी पुष्पवत्यपि ॥ २० ॥
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम् ।
श्रद्धालुर्दोहदवती निष्कला विगतार्तवा ॥ २१ ॥

---

( वीरपत्नी ) नित्यंसपत्न्यादिषु ( सू० ) इति नान्तत्वाद्–ऋन्नेभ्योङीप् ( सू० )। वीरं सूतवती वीरसूः सत्सूद्विषेति ( सू० ) क्विप् । वीरप्रसूर्जगति भार्गवरेणुकैव ( वा० रा० ) वीरस्य प्रसूर्मातेत्यर्थः । जीव-त्तोका तु जीवसूः । वेध्या तु काष्ठहारिणी । जनयितुं प्रवृत्ता सा प्रजाता । ( प्रसूतिका ) सूतकापुत्रिका-वृन्दारकाणां वा ( वा० ) इति पक्षे– इत्वम्, अ स्याग्रहणाद्योगेऽपि ङीप् नास्ति ॥ १६ ॥ विवस्त्रा योषिन्मुक्तकेशीत्यागमः । कोटेन लज्जावशात्कुटिलत्वेन वेति यानि कोटवी । दूयन्तेऽस्या मौत्सर्याद् दूती । संचारयति ( संदेशं ) प्रापयति संचारिका । कतस्यापत्यमिव कात्यायनी, ऋषिपत्न्याकारत्वात् । त्रिलक्षणेयं, कषायेण रक्तं वस्त्रं शुद्धत्वादस्या काषायवसना, अधवा– अपुंस्का रण्डेत्यर्थः ॥ १७ ॥ शिल्पं प्रसाधनादि तेन या परवेश्मान्युपजीवति, स्ववशा स्वायत्ता, एकायत्ता न भवतीत्यर्थः । सह–एर प्रेरणे भरते सैरन्ध्री, चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री स्ववशेति चेति कात्यः । असितपलितयोः क्नम् ङीप् च । प्रादेषैष्ययोर्वृद्धिः ( प्रादूहोढोढ्येषैष्येषु ) । द्वे वाक्ये इत्येके तन्न, यन्मुनि– असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरयोजिता ॥ १८ ॥ वारे राजदेवादिसेवाक्रमे स्त्री वारस्त्री । गणः पेटकोऽस्त्यस्याः, गणपतीश्वरानीश्वरो वा गणिका । वेशो वेश्यावाटे भवा वेश्या । पण्यस्त्री पणस्त्री च । वारे सेवाक्रमे मुख्या ( वारमुख्या ) । कुट्टयति कुट्टनी । शं श्रेयो भालयति शंभ श्रेयोयुक्तं लाति वा शम्भली । चुन्दी देश्याम् ॥ १९ ॥ विप्रश्नो दैवप्रश्नः शुभाशुभेक्षणं वाऽस्त्यस्याः ( विप्रश्निका )। दैवं शुभाशुभं कर्म जानाति दैवज्ञा, अन्तःपुरस्यापुरप्रवेश्यत्वात् । रजोऽस्त्यस्याः रजस्वला, रजःकृष्या-सुतीति ( सू० ) वलच् । स्त्रीधर्मो रजोऽस्त्यस्याः स्त्रीधर्मिणी । अत्रेरपत्यमात्रेयी । ( मलिनी ) मलिना-द्गजसिङीष् ( वा० ), मलादिमन्तद्वा ङीप् ॥ २० ॥ ऋतू रजोऽस्त्यस्या ऋतुमती । उदकात्संज्ञायां यति उदक्या, उदकमर्हतीति । पुष्पितेति माला । पुष्पवत्यस्त्रीरिति प्राच्याः पेठु, अव्यते रक्ष्यतेऽन्येभ्योऽ-सौ, अविनृस्तृतन्त्रिभ्यईः ( उ० )। अविरात्रेयीत्येके, यत्कात्यः– अविः स्त्रीधर्मिणी विद्यादिति । पुष्पं मूत्रफलहेतुत्वाद्रज । ऋतुरेवार्तवम्, ऋतुः स्त्रीरजोऽत्र, ऋतौ गर्भग्रहणकाले भवं वा, ऋतुः प्राप्तोऽस्य वा । ( स्पृहिगृहिपतिदयि )निद्रातन्द्राश्रद्धाभ्यआलुच् ( सू० ) । दोहदं गर्भिण्यभिलाषोऽस्त्यस्या दोहदवती । निष्क्रान्ता कलाभ्योऽशुद्धिभ्यो निष्कला जीर्णा तु ॥ २१ ॥ आपन्नं गृहीतं सत्वं गर्भोऽनयाऽऽपन्नसत्त्वा । गुर्व-

आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी।
गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥ २२ ॥
पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषूः पतिः।
स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥
कानीनः कन्यकाजातः सुतोऽथ सुभगासुत ।
सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥
पैतृष्वसेय स्यात्पैतृष्वस्रीयश्च पितृष्वसुः।
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥ २५ ॥
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः।
कौलटेयः कौलटेरो भिक्षुकी तु सती यदि ॥ २६ ॥
तदा कौलटिनेयोऽस्या कौलटेयोऽपि चात्मजः।
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥

---

गर्भोऽस्या गुर्विणी, सोऽस्यादिभ्यश्चेतीनिः ( सू० )। गुर्वीति च भागुरिः। अन्तर्विद्यतेऽस्याः ( अन्तर्वत्नी ), अन्तर्वत्पतिवतोर्नुक् ( सू० )। गणिकानां समूहो गाणिक्यं, गणिकायाश्चेति वक्तव्यं (वा० ) इति यञ्। गर्भिणीनां समूहो गार्भिणं, इनण्यनपत्ये ( सू० ) इति प्रकृतिभावः ( नस्तद्धित इति टिलोपे प्राप्ते )। युवतीनां समूहो यौवतं, युवत्या अपुंवदिति गणपाठात् ( भिक्षादिषु ), भस्याढे तद्धिते ( वा० ) इति पुंवद्भावो नास्ति ॥ २२ ॥ पुनर्भवति पुनर्भूः। दिधिषुः वाच्या भवति दिधिषूः। द्वौ वारौ ऊढा संस्कृता, यदाहुः— अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः (याज्ञ०)। मनुस्त्वन्यथाह— ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता ॥ तस्याः पुनर्भ्वाः पतिः, किं च— पुनर्भूपतिरुक्तश्च पुनर्भूर्दैधिषूस्तथेत्यन्येऽप्युदन्ताः, दिधिषूमिच्छत्यात्मन इति क्यच् ( सुप आत्मनः क्यच् ), क्विप् ( अन्येभ्योऽपि दृश्यते )। अग्रेऽनन्यभार्यत्वात्प्रधानं दिधिषूर्यस्य सोऽग्रेदिधिषूः, समासान्तविधिरनित्यः ॥ २३ ॥ ( कानीनः ) कन्यायाः कनीन चेत्यण् ( सू० )। ( सौभागिनेयः ) कल्याण्यादीनामिनङ् ( सू० ) इति ढगिनङौ। एवं दौर्भागिनेय इत्याद्युह्यं, हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ( सू० ) इत्युभयपदवृद्धिः, उत्तरपदस्य अनुशतिकादीनां चेति ( सू० )। सुत इत्येव, परस्त्री कल्याण्यादिः ॥ २४ ॥ ( पैतृष्वस्रीयः ) पितृष्वसुश्छण् ( सू० )। ( पैतृष्वसेय ) ढकि लोपः ( सू० ) इति ज्ञापकात् ढक्, अन्त्यलोपश्च। सुत इत्येव, मातृष्वसुश्च ( सू० ) इति छणि मातृष्वस्रीयः, ढकि लोपः ( सू० ) इति ढकि मातृष्वसेयः। विरुद्धाया मातुरपत्यं वैमात्रेयोऽसोदर्यो भ्राता, शुभ्रादित्वात् ( सू० ) ढक्, स्त्रीभ्यो ढक् ( सू० ) इत्यत्र स्त्रीप्रत्ययग्रहणात्। मामातुरस्त्वयमातृकः ॥ २५ ॥ बन्धक्या अपत्यं, कल्याण्यादीनामिनङ् ( सू० ) इति ढगिनङादेशः। बन्धून्— लाति बन्धुला। कुलटाया अपत्यं, स्त्रीभ्यो ढक् ( सू० )। ( कौलटेरः ) क्षुद्राभ्यो वा ( सू० ) इति ढ्रक् ॥ २६ ॥ सा हि भिक्षार्थिनी कुलान्यटति, कुलटाया वा ( सू० ) इति ढगिनङौ, पक्षे ढगेव क्षुद्रात्वाभावात्, अङ्गहीनत्वहीना हि क्षुद्रा। तनोति कुलं तनयः। सूयते सूनुः। सुवति सुतः। पुन्नाम्नो नरकात्त्रायते पुत्रः, पुनाति वा, पुवो ह्रस्वश्च ( उ० ) इति क्त्रः। दारकदायादौ च ॥ २७ ॥ आ समादमः स्त्रियां पुत्र्या दुहितृवाचकाः। गौरादौ पुत्री। दोग्धि पितरौ दुहिता। ( तयोः

आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ।
स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ २८ ॥
जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।
ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥ ३० ॥
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।
पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥ ३१ ॥
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ।
स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ॥ ३२ ॥
पितामहः पितृपिता तत्पिता प्रपितामहः ।
मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।
सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥

---

समे ) पुत्रे दुहितरि च सामान्येन वर्तते । अगतनमपत्, अपति साध्वपत्यम् । स्नूयते तोकम् । सततिः सतान , नन्दनाद्वहप्रना , [ तन्तुश्च ] । उरसा निर्मिते यचेति- अण्यतो ( उरसोयच, उरसोण्च ) । तनोति कुल तात , स्त थऽण् । जनयति जनक । पाति पिता । वप्ता च ॥२८॥ या जनित्री त्रिलोक्या इति स्वन्तर्भावितण्यर्थे तृन् । प्रसूयते प्रसू । मात्यस्यां गर्भो माता । भग कल्याणमस्त्यस्या भगिनी । सुष्ठ्वस्यते स्वसा, सावसेर्ऋन् ( उ० ), नस्वस्रादिभ्य ( सू० ) इति ङीप् नास्ति । न नन्दति भ्रातृजाया ननन्दा, नञिचनन्दे ( उ० ) इति ऋन् । न पतत्यनया कुल नप्त्री । पुत्रस्यापत्य पौत्री सुतस्यात्मजा ॥ २९ ॥ यतते स्पर्धया याता, यतेर्वृद्धिश्च ( उ० ) इति ऋन् । ( भ्रातृजाया ) ऋतोविद्यायोनिसम्बन्धेभ्य ( सू० ) इति षष्ठ्या अलुग्नास्ति, सप्तमासमासात्, यथा- द्रक्ष्यसि भ्रातृजायाम् ( मेघ० ) । ( मातुलानी ) इन्द्रवरुणेति ( सू० ) ङीपानुकौ । उपाध्यायमातुलाभ्या वा ( मातुलोपाध्याययोरानुग्वा ) इति पक्षे ङीप् ॥३०॥ पत्युर्माता पत्न्याः श्वश्रू , पत्न्या माता पत्यु श्वश्रूः, श्वशुरस्योकाराकारलोपश्च (वा० ) इत्यूङ् । तयो पतिपत्न्यो पितान्योन्य श्वशुर , शु पूजित कृत्वाश्नुते । ( पितृव्यः ) पितृव्यमातुलमातामहपितामहा (म०) इति साधु । (मातुल )प्रागवत् ॥३१॥ श्यायते श्याल , स्यम वितर्के स्माद्वा ( स्याल ), पत्युः श्याला इत्यर्थ । स्वामिन पत्यु -भ्राता कनिष्ठ पत्न्या ,दीव्यति देवा, दिवेर्ऋ (उ०)। अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यर (उ०) देवर । स्वसुरपत्य स्वस्रीय , स्वसुश्छ (सू०)। जाया मिमीते जामाता॥३२॥ प्रगत पितामहात् ( प्रपितामह ) । मातु पिता मातामह , [ तत्पिता प्रमातामह ] । समानः पिण्ड एषां, य स्मृतिः-सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । सप्तमादूर्ध्वं सगोत्रा । समानो नाभिर्मूलमेषा सनाभय , ज्योतिर्जनपदेति ( सू० ) समानस्य सत्वम् ॥ ३३ ॥ समाने उदरे शयित समानोदर्य, समानोदरे शयित ( सू० ) इति यत् । सोदराद्यः- सोदर य ( सू० ), विभाषोदर इति ( सू० ) समानस्य स वा । समाने गर्भे भव सगर्भ्य , सगर्भसयूथसनुताद्यन् ( सू० ), छान्दसोपि लोकेऽभिधानात्, सह जायते सहजा भ्राता । समान गोत्रमेषा सगोत्रा , ज्योतिर्जनपदेति (सू०) सत्वम् । ज्ञायते ज्ञाति । बध्नाति बन्धु । ( बान्धव ) स्वार्थेऽण् । एव स्वो ज्ञातिवचन , अन्य आत्मीयार्थ ॥ ३४ ॥ ज्ञाते-

ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ।
धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥
अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।
भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥
मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।
श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥
दंपती जंपती जायापती भार्यापती च तौ ।
गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् ॥ ३८ ॥
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ ।
तृतीयाप्रकृतिः शण्ढः क्लीबः पण्डो नपुंसकम् ॥ ३९ ॥
शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ।
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥ ४० ॥

---

भावो ज्ञातेयं, कपिज्ञात्योर्ढक् (सू०) । बन्धूनां समूहो बन्धुता, ग्रामजनबन्धु(सहाये)भ्यस्तल् (सू०), तनि स्त्रीलिङ्गवचनम् । धुनोति धवः । प्रीणाति प्रियः, इगुपधेति (सू०) कः । पाति पतिः, पातेर्डतिः (उ०) । बिभर्ति भर्ता वरयिता वरश्च । जारयति जारः, दारजारौ कर्तरि णिलुक् च (वा०) । उपजारः पतिरुपपतिः ॥ ३५ ॥ भर्तरि जीवति । कुण्डयते कुलमनेन कुण्डः, कुडि दाहे । जारज इत्येव । गुप्यते लज्जाकरत्वाद् गोप्यते गोलकः, परनार्यां प्रजायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलक इति स्मृतिः । भ्रातुरपत्यं भ्रात्रीयः, भ्रातुर्व्यच्च (सू०) इति वा छः । भ्रातृव्यो नानार्थे । भ्राता च भगिनी चेति (भ्रातरौ), भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (सू०) इत्येकशेषः । [एवं पुत्रौ] ॥ ३६ ॥ माता च पिता च मातापितरौ आनङृतो द्वन्द्वे (सू०) । (पितरौ) पिता मात्रा (सू०) इत्येकशेषो वा । मातरपितरावुदीचाम् (सू०) इति- अन्यः साधुः । प्रसूर्माता जनयिता चेति द्वौ पितरौ । (श्वशुरौ) श्वशुरः श्वश्र्वा (सू०) इत्येकशेषो वा । [पुत्रश्च दुहिता च प्रागुक्तम्] ॥ ३७ ॥ राजदन्तादिः (सू०) जायाशब्दस्य दंभावो जंभावो वा निपात्यते, दं भार्येति निघण्टुः । गर्भं धत्तेऽत्र गर्भाशयः । जरामेति जरायुः । उल्बति वृणोति उल्वः । कलयति कं लसति वा कललः शुक्रशोणितसमवायः, प्रसिद्धास्य पर्याया लोके, अस्त्रीत्यवचनार्थं तु विधि । उल्बार्थोऽयं कलल इत्येके, यथा सुतिः- तदुल्बं कललं च तत् ॥ ३८ ॥ दशमे मासि सूतवे इति श्रुतेः, नवमे दशमे मासि प्रबलैः सूतिमारुतैः ॥ निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वर इति स्मृतेश्च नवमो दशमो वा मासो, विजनने भवो वैजननः । गीर्यते गर्भः । भ्रियते भ्रूणः कुटिलः । स्त्रीपुंसाभ्यामन्या तृतीया प्रकृतिः, लिङ्गान्तरत्वात् । शम्यति शण्ढः, [षण्ढोऽपि] । क्लीयते क्लीबः । पण्डते पण्डः, [षिण्डोऽपि] । न स्त्री पुमान् नपुंसकं, नभ्राण्नपादिति (सू०) साधु, स नपुंसको भवेदिति स पुंस्यपि ॥ ३९ ॥ शिशोर्भावः शैशवं, प्राणभृज्जातेरण् (सू०) । यूनो भावो यौवनं, हायनान्तयुवादिभ्योऽण् (सू०) । (वार्धकं) गोत्रे चरणाद्वुञ् (सू०) वृद्धाच्चेति वक्तव्यम् (वा०) वुञ्, मनोज्ञादित्वात् (द्वन्द्वमनोज्ञादिभ्यश्च) भावे वार्धकं, यथा- वार्धके मुनिवृत्तीनाम् (रघु०) ॥ ४० ॥ पलति शीर्भो (?) [illegible] पालनं, पल गतौ ।

पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ।
स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी ॥ ४१ ॥

बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा ।
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥ ४२ ॥

वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ।
जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ ४३ ॥

अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः ।
तुन्दिलस्तुन्दिभ(क)स्तुन्दी बृहत्कुक्षिः पिच(चि)ण्डिलः ॥४४॥

अवटीटोऽवनाटश्चावभ्रटो नतनासिके ।
केशवः केशिकः केशी वलिनो वलिभः समौ ॥ ४५ ॥

---

आदिशब्दाद्रोमादौ च । विस्रसतेनया कवाटग विस्रसा । जीर्यन्त्यनया जरा पिद भिदादिभ्योऽङ (सू॰) । उत्ताना शेते-उत्तानशया, अधिकरणेशेते (सू॰) इत्यच्-उत्त नादिपुक्तपु (वा॰) इत्यच । डिम्भेति प्राक् पश्चिकमेणोक्त इह मातुपक्रमात् । स्तन पिबति स्तनपा, (सुपस्थ इत्यच) सुपीति याग वभग-स्क । स्तन धयति स्तनंधयी, नासिकास्तनयोर्ध्मा धेटोः (सू॰) इति खश्, धेटष्टित्वाद्ङीप् । स्त्री-लिङ्गेन निर्देश स्त्रीप्रत्ययप्रदर्शनार्थ ॥ ४१ ॥ वलति(ते) प्राणिति बाल, ज्वलादिरत्वाण (सू॰), वाड् आप्रावेस्माद्वा । अरत्ये कुत्सिते मूढे मनेरौत्सर्गिक स्मृत । नकारस्य च मूर्धन्यस्तेन सिध्यति माणव ॥ स्वार्थे कन् (माणवक) । वयसि प्रत्यग्रे तिष्ठति वयस्थ । तरति तरुण । यौति मिश्री-भवति स्त्रिया युवा । प्रगत वयोऽस्य प्रवया । तिष्ठति स्थविर । वर्धते स्म वृद्ध, एतमादौ गड्डरिका-प्रवाहेग भूते क्त वर्तमाने युक्त शीलितादिवत् । जिनाति स्म जीन, ग्रहिज्यावयीति (सू॰) सम्प्रसारण, हलसारणस्येति (सू॰) दीर्घ, ल्वादिल्वात् (सू॰) निष्ठा नत्वम् । जीर्यति स्म जीर्ण, श्र्युक-किति (सू॰) इत्यनिट् । (जरन्) जीर्यतेरतृन् (सू॰) ॥ ४२ ॥ अतिशयेन वृद्धो वर्षीयान्, ईयसुनि प्रियस्थिरेति (सू॰) वर्षादेश । दशमीवस्थाविशेषोऽस्यास्ति दशमी, वयसिपूरणात् (सू॰) इतीनि, यन्मुनि – इगो वयोदशापेन सप्तमी दशमाति च । अतिशयेन वृद्धो ज्यायान्, ज्यच (सू॰), वृद्धस्य-च (सू॰) इति ज्यादेश, ज्यादादीयस (सू॰) इत्यात्वम् । अग्रे जातोऽग्रिय, अग्राद्यत् (सू॰), घच्छौ च (सू॰) इति घ । अग्र्याग्रीयौ च । अग्रिमराठे, अग्रादिपश्च डिमच् (वा॰) । जघन्यज पश्चा-ज्जात । अत्यर्थं युवा कनिष्ठो यवीयाश्च, युवाल्पयो कनन्यतरस्याम् (सू॰), स्थूलदूरेति (सू॰) यणादिलोप पूर्वस्य गुण । एव कनीयान् यविष्ठ्य । अवरे जायतेऽवरज ॥ ४३ ॥ छ्यति स्म छात, छो छेदन । मासमस्यास्ति मासल, सिध्मादित्वात् (सू॰) लच् । अंसावस्य स्त (असल), वत्सां-साभ्यां कामबले (सू॰) इति लच् । तुन्द विवृद्धम् अस्यास्ति, तुन्दादिभ्य इलच्च (सू॰) इति च इलिठनौ । उदरिलोपि । तुन्दिरस्यास्ति तुन्दिभ, तुन्दिवलिवटेर्भ (सू॰) ॥ ४४ ॥ नतनासिकाया सज्ञायामीट-च्नाटज्भ्रटच (सू॰) । नतनासिकश्चिपिटघोण । नत या नासिका नासानमनस्येत पर्यन्ते । प्रशस्ता केशा सन्त्यस्य केशव, केशाद्वोऽन्यतरस्याम् (सू॰) । वल्त्रिवयन्कोशाभ्यास्ति पामादित्वान्न (लोमादि-पामादीति) । (वलिभ) तुन्दिवलिवटेर्भ (सू॰) ॥ ४५ ॥ पूगनगार्गेन पेगण्ड । स्वरतीति सर्व ।

कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसके ।
कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥ ८५ ॥
लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ।
स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८६ ॥
लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम् ।
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८७ ॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।
प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८८ ॥
निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ।
तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ॥ ८९ ॥
तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।
कौक्षेयको मण्डलाग्रः करवा( पा )लः कृपाणवत् ॥ ९० ॥

---

स्यान्ति गाण्डीवं, गाण्ड्यजगात्संज्ञायामिति ( सू० ) वः, गाण्डिरिदन्त ईदन्तश्चात्र प्रश्लिष्य निर्दिष्टः । पुंनपुंसके इति प्रथमाद्विवचनमजहल्लिङ्गम् । अस्य धनुषः प्रान्ते कोटिः, कुटतीति । अटत्यटनी, अरत्नि इत्येके । गोधा च गोधा च गोधे द्वे, सख्यमाचिन्वान् ,गुध परिवेष्टने । तल चर्मादिमयो ज्याघातवारः ॥ ८५ ॥ ( लस्तकः ) लस श्लेषणे । मूर्वाख्यतृणस्य विकारो मौर्वी । जिनाति ज्या । जीवापि । शिञ्जते शब्दायते शिञ्जिनी । गुण्यतेऽभ्यस्यते गुणः । जङ्घयोश्चारि( वि )निवृत्तौ स्थितिः स्थानकमिति तु विशेषः । आलीढं भुवमालीढम् । आदिशब्दात्समपादं वैशाखं मण्डलं च धनुर्वेदप्रसिद्धम् । भरतस्त्वन्यथाह– वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षड् नृणाम् ॥ ८६ ॥ लक्ष्यत इति ( लक्ष ), यत् ण्यत् । शृणाति शरहिंसस्तस्मै हितं शरव्यं, उगवादिभ्योयत् ( सू० ), शरैर्वीयते छ यत्ने वा । ( उपासन ) असु क्षेपणे । पर्षति सिच्यते– अरुजा पृषत्कः, पृषत्पत्रमस्येति धनुर्वेदः– पुङ्खः शरस्तथा शल्यं पक्षस्नायुजतूनि षट् । वणति वण्यतेऽनेन वा बाणः । विशीर्यते विशिखः, शिञ् निशाने, विविधशिखो वा । अजिह्मग ऋजुगामी ॥ ८७ ॥ कल्यते क्षिप्यते कलम्बः । मार्गयति मृग्यः मार्गणः । शृणाति शरः । रोप्यते निखन्यते रोपः । इष्यति– इषुः, इष गतौ । प्रक्ष्वेडनो नानार्थे । प्रक्ष्वेडते प्रक्ष्वेडनः, क्ष्विदे रूपं, क्ष्वेडितेर्नियः । नरमचति, नराच एव नाराचः, स्वार्थेऽण्, सर्वकोहीयम् । ( पक्ष ) पक्ष परिग्रहे । वजति गच्छत्यनेन वाजः, न्यङ्क्वादेः ( सू० ) अकुत्वम् ॥ ८८ ॥ त्रिषान्ता वाच्यलिङ्गाः । निरस्यते स्म प्रहीयते स्म, क्षिप्त इत्यर्थः । विषेणाक्ते प्रक्षिप्ते, दिह्यते स्म लिप्यते स्म । तूष्यते पूर्यते शरैस्तूणः, तूर्णी ति लिङ्गान्यभेदर्थम् । उपसज्यन्ते नियज्यन्ते च बाणा येष्वस्युपासङ्गनिषङ्गौ । इषवो धीयन्तेऽत्रेषुधिः । कलापो नानार्थे ॥ ८९ ॥ खड( ण्ड )ति भिनत्ति खड्गः । निष्क्रान्तः त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः । चन्द्रवद् हासः प्रभाऽस्य चन्द्रहासः । अस्यतेऽसिः । कर्मण्यर्थाद् रिष्टिः, कृपकः ( सू० ) इति प्रकृतिः, हिंसार्थाद्रिषेस्तु रिष्टिः । कुक्षौ भवः कौक्षेयकः, कुक्षिकलशीनि ( सू० ) ढकञ् । मण्डलकृत्स्नमग्रमस्य मण्डलाग्रः । करे वलनमस्य करवालः । कल्पने कृपाणः, वक्तिः पूरणार्थं. ॥ ९० ॥ ( त्सरुः ) त्सर छद्मगतौ । मीयते मत्यिबन्धे प्रक्षिप्यते मेखला, यथा बहरतो

त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम् ।
फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य य ॥ ९१ ॥
द्रुघणो मुद्गरघनौ स्यादीली करवा( पा )लिका ।
भिन्दिपालः सृगस्तुल्यौ परिघः परिघातनः ॥ ९२ ॥
द्वयो. कुठारः स्वधितिः परशुश्च परश्वधः ।
स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९३ ॥
*वा पुंसि शल्यं शङ्कुर्ना स( श )र्वला तोमरोऽस्त्रियाम् ।*
प्रासस्तु कुन्त कोणस्तु स्त्रियः पाल्यश्रिकोटय. ॥ ९४ ॥
सर्वाभिसारः सर्वौघ. सर्वसंनहनार्थक ।
लोहाभिसा( हा )रोऽस्त्रभृतां राज्ञां नीराजनो विधिः ॥ ९५ ॥
यत्सेनयाभिगमनमरौ तदभिषणनम् ।
यात्रा व्रज्याभिनिर्याणं प्रस्थान गमनं गम. ॥ ९६ ॥

---

हस्तान्न निर्याति। फलति विशीर्यते प्रहारै (फल,फलक) फल, **मुनिना** खड्गचर्मे दृष्ट, अय तु लोकात् फलक मन्यते, यच्छाश्वत – लाभे शस्ये शराग्रे व्युष्टौ च फलके फलम् । चर्ममयत्वाच्चर्म । संगृह्यतेऽनेनेति संग्राहः, समिमुष्टाविति ( सू० ) घन्, अस्य चर्मणो मुष्टिग्रहणस्थानम् ॥९१॥ द्रुं वृक्षाद्रं हन्ति द्रुघण, द्राघिनो वा, अयाघनोऽन्य. । मुद गिरति ग्रसते मुद्गर । हन्यतेऽनेन घन, मूर्तौ घनइति ( सू० ) साधु, यच्छाश्वत – वाद्ये मुस्तेऽम्बुदे सान्द्र घन स्याल्लोहमुद्गरे । ईड्यन ईली, एकधारोऽसिस्तुल्यकायुधम् । करवालात् अल्पे ( सू० ) कन्, तरवालिकेत्येके । भिन्दत पालयति भिन्दिपालः, भिण्डिपालो वा हस्तक्षेप्यो लगुड । सृज्यते सरति वा सृग । परितो हन्ति परिघ, परौघ इति ( सू० ) घ घत्वम्, लोहबद्धो लगुड ॥ ९२ ॥ कुठान्वृक्ष नियर्ति कुठार । स्व धियति बिभर्ति स्वधिति । पराञ्शृणाति परशु परश्वधश्च, पर्श्वध पि, यदाह– याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ । शस्यतेऽनया शस्त्री । असे. पुत्रीवाल्पत्वात् । छुरति छिनत्ति छुरिका, क्षुरिकापि ॥ ९३ ॥ शलति विशल्यन्त शल्य । शङ्कतेऽस्माच्छङ्कुरायुधविशेष, यच्छाश्वत – सल्य कीलकयो शङ्कु शङ्कु प्रहरणान्तरे । अन्यत्रोपचाराच्छल्यम् सर्वान्–लाति सर्वला । स्तौम्यनेन प्रश्न ध्यत तोमर तु सीवो वा । प्रास्यते प्रासो हस्तक्षेप्य. शल्य । कुणति कुन्त । कोणो गृहादेर्विदिक्– अस्त्याख्या, कुण शब्दोपकरणयो । पाति पालि । अश्नुतेऽश्रि । कुटति कोटि ॥ ९४ ॥ सर्वेण सैन्येनाभिसरण सर्वाभिसार । सर्वेषामोघो वहन सर्वौघ । सर्वे सनह्यन्तेऽत्र सर्वसनहनम् । शस्त्रभृता राज्ञा य शान्तिको विधि प्रस्थानात्प्राक् स लोहाभिसार, लोहं शस्त्रमभिसार्यते प्रस्थानेनेति । नीरस्य शान्त्युदकस्याजन क्षेपोऽत्र नीराजन, मन्त्रोक्त्या वाहनायुधादेर्निशेषेण राजनं वात्र । नीराजनादनन्तर कर्म लोहाभिसार इति **मुनि** – विधिर्लोहाभिसारस्तु राज्ञा नीराजनोत्तर", दुर्गोऽपि– लोहाभिसारस्तु विधि परो नीराजनान्नृपै । दशम्या दर्शिते कार्य इति । अत एव नीराजनाद्विधिरित्येके पठन्ति ॥ ९५ ॥ ( अभिषणन ) सत्यापपाशेति ( सू० ) णिच्, उपसर्गात्सुनोतीति ( सू० ) षत्वम् । यान्त्यस्या यात्रा । व्रजन व्रज्या, व्रजयजोर्भावे क्यप् ( सू० ) । ( प्रस्थानं ) प्रपूर्वस्तिष्ठतेर्ल्युट् । गमे.– ग्रहवृद ( सू० ) इत्यपि गम ॥ ९६ ॥ सैन्यस्य सर्वतो व्यासिरासारः, आसि

स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम्।
अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९७ ॥
वैतालिका बोधकराश्चाक्रिका घाण्टिकाः समाः ।
स्युर्मागधास्तु मगधा बन्दिनः स्तुतिपाठकाः ॥ ९८ ॥
संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ॥ ९९ ॥
रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ।
चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले ॥ १०० ॥
पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ।
सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा ॥ १०१ ॥
अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम् ।
आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ॥ १०२ ॥
अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ।
द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ॥ १०३ ॥
शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ।
वीरपानं तु यत्पानं वृत्ते भाविनि वा रणे ॥ १०४ ॥

---

यते येनेत्यासारोऽन्यागन्तृबलम् । प्रसरस्तु सैन्यादिहिंस्रजलवर्षे प्रसरणमिति कौटिल्यः, यन्मृगं-निरुद्धवीवधासारप्रसारा गा इव व्रजम् ( शिशु० ) । प्रकर्षेण चक्रं सैन्यं प्रचक्रम् । अभिमुख्येनाभिमुख-गमनं यानमभिक्रमः ॥ ९७ ॥ विनालः शब्दः प्रयोजनमेषां वैतालिकाः राजविरुदपाठका मङ्गल-[ मङ्गला ]ख्याः, प्रातर्बोधकरा इत्येके । ( चाक्रिकाः ) चक्रं राष्ट्रं पर्यायेण देवतायै ये शंसन्ति ते; भावकाख्याः । ( मागधाः ) वंशोच्चारणेन ये याचन्ते, अतुष्टा- वैतालिकाश्च कथ्यन्ते कविभिः सौविदा-यिकाः । राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः । मागधाः स्तुतिविशदाः इति, मगधेति याज्ञार्थेः कण्ड्वादिः, यच्च श्रीभोजः— कर्मठिनः कृपुष्यन्तु कं मगध्यन्तु मागधाः । कवियुष्यन्तु यत्न[युध्वा]नो रामेरय तुरण्यति ॥ वन्दन्ते स्तुवन्ति तच्छीलाः ( वन्दिनः ) । द्वयोर एकार्था इत्येके ॥ ९८ ॥ संशपन्ति परावलमानं, मवश्य वा युध्यन्ते इति नेमशब्दा संशप्तकाः ॥ ९९ ॥ रीयते रेणुः, रीङ् गतौ । धूयते धूलिः । पांशयति वस्त्रादि पांशुः, पशि नाशने । रज्यते वस्त्रादनेन रजः क्लीबे, गजनरखरजःसुरथं-स्यन्न ( मा० ) इति नलोपः । ( क्षोदः ) क्षुदिर् संपेषणे, धूलिविशेषौ, यच्छाश्वतः— चूर्णानि वास-योगाः स्युश्चूर्णो धूलिः सशर्करा । पिजि हिंसायाम्, साह च— समुत्पिञ्जो निर्मत्कुल. ॥ १०० ॥ पतति धूयते पताका । विजयते विजयन्तः, औणादिकोऽच् ( तृभूवहि ), तस्येयं वैजयन्ती । केत्यते ज्ञायतेऽनेन केतनम् । ध्वजति धूयते ध्वजः, पताकादण्डो ध्वज इत्येके । केतुर्नार्थे । वीरा आशंस्यन्तेऽत्र ( वीराशंसनम् ) ॥ १०१ ॥ अहं पूर्वमस्या क्रियायामिति सर्वे यत्र ब्रुवते साहंपूर्विका. स्वार्थे कन्- म-स्पर्धायां वा ठन् ( अनद्यतिठनो ) । अहो पुरुषेऽहमित्यस्य भावः ( आहोपुरुषिका ), मनोज्ञादित्वाद्-वुञ् ( द्वन्द्वमनोज्ञादिभ्यश्च ) ॥ १०२ ॥ अहं शब्दोऽहं यत्र इत्यस्यामहमहमिका, ठन् ( मेयादिभ्यश्च ), अहंशब्दो निपातः । द्रवत्यनेनारिं द्रविणम् । तरत्यनेनारिं तरः । सहतेऽनेनारिं सहः, असन्तो द्वौ । शूरस्य भावः शौर्यम् । तिष्ठत्यनेन स्थाम । शुष्यत्यनेनारिः शुष्मम्, शुष्मेत्येके ॥ १०३ ॥ शक्नोति शक्तिः । प्राणनं प्राणः । विक्रमणेनेन विक्रमः । वीराणां पानं वीरपानम् ॥ १०४ ॥ जायते जन्यं, मल्लोत्-सेन ( मु० ) माधु । प्रधावन्ति प्रधनम्, धनिमोदयोर्थेन निधनवत् । मिलन्त्यस्मिन् मृधम् । अतद्-

युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।
मृधमास्कन्दनं संख्यं समीकं सांपरायि( संपराय )कम् ॥ १०५ ॥
अस्त्रियां समरानीकरणाः कलहविग्रहौ ।
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥ १०६ ॥
अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ।
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥ १०७ ॥
नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले ।
क्ष्वेडा तु सिंहनादः स्यात्करिणां घटना घटा ॥ १०८ ॥
क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् ।
विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ ॥ १०९ ॥
प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम् ।
अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् ॥ ११० ॥
मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ।
अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ॥ १११ ॥

---

न्यवेऽस्कन्दनम् । संचक्षतेऽस्मिन् संख्यं, सपूर्वचक्षिङ्र्थार्थः । समीयन्तेऽस्मिन् समीकं, ईङ् गतौ । संपरायो मृत्युः प्रयोजनमस्य सांपरायिकं, [ टञ् ], विनयादित्वात्स्वार्थे ( सू० ) ठक् ॥ १०५ ॥ समियन्ति ( ते )ऽसंगच्छन्तेऽस्मिन् समरः । न नीयते स्थान्यनेन नीकम्, अनीकमप्यत्र च । रणन्ति दुन्दुभयोऽत्र रणः, अशिण्योऽर्धनिवकल्पादच् ( वा० ) । कल्यते क्षिप्यतेऽत्र कलहः, कलं हीनबलं हन्ति वा । विगृह्णन्त्यत्र विग्रहः, ग्रहवृद्- इति ( सू० ) अप् । संप्रहरन्त्यनेनं धनन्त्यत्र संप्रहारः । अभिपतन्त्यत्राभिसंपातः । कलयन्त्यत्र कलिः । संस्फुटन्त्यत्र संस्फोटः, संस्फेट इति युक्तः पाठः, स्फिट अनादरे, भरते तु संस्फेटः । संयुज्यतेऽत्र सगता रथयुगा अत्र वा संयुगः ॥ १०६ ॥ अभ्यामृद्नन्त्यत्राभ्यामर्दः । समाघ्नन्त्यत्र समाघातः । संग्रामयन्तेऽस्मिन् संग्रामः । अभ्यागच्छन्त्यत्राभ्यागमः । आह्वयन्तेऽत्राहवः, आह्वियुद्धे ( सू० ) इत्यप्, संप्रसारणम् । समुदीयन्ते मिलन्त्यत्र समुदायः । संयतन्ते संयच्छन्ति वास्यां संयत् । समयन्ति संगच्छन्तेऽत्र समितिः । आ- अजन्ते क्षिप्यन्तेऽत्राजिः । युध्यन्तेऽस्यां युत्-द् ॥ १०७ ॥ नियतं युद्धं ( नियुद्धं ) । ताम्यन्त्यत्र तुमुलं, तुमु- ग्लानौ वा । ( क्ष्वेडा ) क्ष्विदृ अव्यक्ते शब्दे- इति दुर्गः । सिंहानामिव नदनं भटानां सिंहनादः । क्ष्वेडा वा । ( घटा ) घटादयः षितः ( ग० ) इति षिद्भिदादिभ्योऽङ् ( सू० ) ॥ १०८ ॥ संरवणं संरावः, उपसर्गे रुवः ( सू० ) इति घञ् । ( बृंहितं ) बृहि शब्दे । ( विस्फारः ) स्फुर संचलने । पटो हन्यतेऽत्र पटहः । आडम्ब्यते- आडम्बरः, [illegible] ॥ १०९ ॥ प्रगतं सभं प्र प्रसभे, [illegible] युक्तायुक्तविचारे [illegible], प्रसं[प्रसभ]प्रसवे वा । बलादिति [illegible] हर्षः । ( हठः ) हठ प्लुतिशठत्वयोः । स्खलनं मार्गात्पतनम् । छ्यति छिनत्ति छलम् । न जने साधु- अजन्यम् । उपद्रवकरमाशयाति- उत्पातः, ज्वलादित्वाण्णः ( ज्वलितिकसन्तेभ्यो णः ) । [illegible] उपसृज्यतेऽनेनोपसर्गः ॥ ११० ॥ कश्मलं( ते ) [illegible] । ( पीडन ) पीड अवगाहने । ( अभ्यवस्कन्दनं ) [illegible] । धातौ च । रात्रौ च सौप्तिकम् । ( विजयः ) विः स्वार्थे [illegible] ॥ १११ ॥ मर्यादे करण [illegible] निर्यातनं शोधनं, यत्र निष्क्रयोपकारादेः । [illegible] । ( सू० ), [illegible] ( सू० ),

वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ।
प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ॥ ११२ ॥
अपक्रमोपयानं च रणे भङ्गः पराजयः ।
पराजितपराभूतौ त्रिषु नष्टतिरोहितौ ॥ ११३ ॥
प्रमापणं निबर्हणं निकारणं विशारणम् ।
प्रवासनं परासनं निषूदनं निहिंसनम् ॥ ११४ ॥
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥ ११५ ॥
निर्वापणं विशसनं मारणं प्रतिघातनम् ।
उद्वासनप्रमथनक्रथनोज्जासनानि च ॥ ११६ ॥
आलम्भपिञ्जविशरघातोन्माथ( न्मन्थ )वधा अपि ।
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ॥ ११७ ॥
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ।
परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ॥ ११८ ॥
मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ।
कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ॥ ११९ ॥

---

ऽनियुद्रुव- ( सू० ) इति घञ् ॥ ११२ ॥ अपक्रमणं क्रमः ( अपक्रमः ) । अपगोपसरणं, अपगमो-पयानम् । परिभूतो भिभूतेति । त्रिषु लिङ्गेषु, नश्यति स्म नष्टम्- अदृश्यम् । तिरोधाने स्म तिरोहितं पर्यावरितम् ॥ ११३ ॥ अनाहिंसार्थो अप्युपसर्गवशाद् हिंसार्थो ज्ञेयः, अकर्मकाश्च णिचा सकर्मकाः । प्रमापणं, मीञ् हिंसायां णिच्, मीनातिमिनोतिदीङां ( सू० ) आत्वे, पुक् । निपूर्वाद् बर्हेर्बृंहेर्वा निबर्हणम् । विशारणं, शॄ हिंसायाम् । निकारणं, कृञ् हिंसायाम् । प्रवासनः प्रपूर्वात् वसेः प्रवासनम्, एवं निर्वासनम् । असु क्षेपणे इत्यस्मात् परासनमपासनं च । षूद क्षरणे इत्यस्मात् निषूदनं जीवक्षरणम् ॥ ११४ ॥ ( संज्ञपनं ) ज्ञपे-र्मित्त्वाद् ह्रस्वः ( मितां ह्रस्वः ) । निर्ग्रन्थनं, ग्रथि कौटिल्ये । निस्तर्हणं, तृहि हिंसार्थादेः- पूर्वात्, स्तृहेर्वा निस्तर्हणम् । क्षणनं, क्षणु हिंसायाम् ॥ ११५ ॥ निर्वापणं, वै ओवै शोषणे । विशसनं, शसु हिंसायाम् । क्रथनं, क्रथ हिंसायाम् । उज्जासनं, जसु हिंसायाम् ॥ ११६ ॥ आलम्भः, लभिरत्र हिंसार्थः, ( लभेः ) उपसर्गात्खल्घञोरिति (सू०) नुम् । पिञ्ज, पिजि हिंसार्थः । विशरो हिंसाविशरः । हननं वधः, हनश्च वधः हनि ( सू० ) अप्, वधादेशश्च, पक्षे घञि घातः । ( उन्माथः ) मथ संक्षोभणे । व्यापादनं विशसनं कदनं च निशुम्भनम् । ( पञ्चता ) देहारम्भकानां भूतानाम्, मरणं पञ्चत्वम् । कालेन भवः कालस्य धर्मः, मृत्युलक्षणः, प्राणानामत्ययो वा यद्वा- कालः संहरति प्रजाः, तस्य धर्मः स्वकर्म. संहारः । दिष्टस्य कालस्य जीविताऽवधेः अन्तो दिष्टान्तः ॥ ११७ ॥ अन्तः पर्यन्तः । मरणं मृत्युः, द्वयोः पुंस्त्रीलिङ्गयोः । निधनं निधनम्, निधनो धनिर्नाशार्थः इति स्वाम्याः । समर्थोऽर्थः दीर्घनिद्रा हिंसा संस्था प्रमापणम् । परासवा असवो प्राणाः परासुः । प्राप्तः पञ्चत्वम् इव संस्थितः, चतुर्भिः स्थिते-ऽपरे वर्तते । सर्वेते वाच्यलिङ्गाः ॥ ११८ ॥ चीयते स्म चिता । चेतव्या चित्या, चिञ्प्रायर्थे चेश्चेति ( सू० ) क्यप् । चीयते चितिः । एते प्रेतदाहार्थेन्धनस्थाने वर्तन्ते । कस्य शिरसो बन्धोऽत्र कबन्धः, केन बन्धो वा । क्रियया युक्तं नृत्यादिकं मूर्धरहितमूर्ध्वं कलेवरम् । इत्येते ॥ ११९ ॥ श्मशानं श्मशानम् । निवृत्तेऽस्मिन्नग्नेः नभसि शिवनम् । प्रेतवन करटं च । कुणपं शवं यानि इत्यादि, पन-

श्मशानं स्यात्पितृवनं कुणपः शवमस्त्रियाम् ।
प्रग्रहोपग्रहो वन्द्यां कारा स्याद्बन्धनालये ॥ १२० ॥
पुंसि भूम्न्यसवः प्राणाश्चैवं जीवोऽसुधारणम् ।
आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ॥ १२१ ॥

इति क्षत्रियवर्गः । ८ ।

ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।
आजीवो जीविका वार्त्ता वृत्तिर्वेतन( वर्तन )जीवने ॥ १ ॥
स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम् ॥ २ ॥
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ।
सत्यानृतं वणिग्भावः स्यादृणं पर्युदञ्चनम् ॥ ३ ॥

---

जयाख्यस्य वयो शवे सभवात् । शवति यात्यस्माज्जीव शव । प्रगृह्यते बध्यते प्रग्रह । वन्द्यते याच्यते वन्दी हठहृता स्त्री, बलवतो हस्तक्षिप्तो राजपुत्रादिश्च, यदाहु – वन्दी स्यात्पणबन्धस्थ । कार्यते क्षिप्यतेऽस्यां कारा, भिदाद्यङ् ( षिद्भिदादिभ्यो ) ॥ १२० ॥ अस्यन्तेऽसव, स्वभावाद्बहुत्वे पुलिङ्ग । प्राणन्त्यमीभि प्राणा, एवं शब्दात्पुंसि भूम्नि । प्राणो नाम वायुरित्येकत्वमजीवार्थत्वात् । जीवन जीव प्राणधारणम् । जीवादि । आयत्य युर्जीवितावधि, उसन्त. क्लीबे, छन्दस्युदन्तोऽपि । जीवत्यनेन जीवातु, जीवनायौषध जीवनरक्षोपाय, यथा– जावातवे विसृज शङ्कमुनौ कृपाणम् ( उ० ), जीवितौषध चेत्युपाध्याय ॥ १२१ ॥ इति क्षत्रियवर्ग । ८ ।

१ ऊर्वोर्भवा ऊरव्या, शरीरावयवाच्चेति ( सू० ) यत्, यच्छ्रुति – ऊरू तदस्य यद्वैश्य । अरणीयोऽर्य., अर्यं स्वामिवैश्ययो ( सू० ) इति साधु । विशोपत्य जातिर्वैश्य, गर्गादिभ्योयञ् (सू०) । भूमिं स्पृशति कृष्यादिना भूमिस्पृक् । विशतीति विट् । ( आजीव ) आजीव्यतेऽनेनेति करणे भावे वा साध्य । जीवन जीविका, रागाद्याया ( सू० ) इत्यन धातुम त्वाद् भावे ण्वुल् वक्तव्य ( धात्वर्थनिर्देशेण्वुल् ) । कृष्यादिस्तूपचारात् । वर्तन वृत्तिरत्यस्या वार्त्ता, प्रज्ञाश्रद्धार्चावृत्तिभ्योण ( सू० ) । वर्तन्तेनया वृत्ति । वेति राद्दस्यनन वेतनम् ॥ १ ॥ कर्षण कृषि, इक्कृष्यादिभ्य ( वा० ) । पशुपालस्य कर्म पाशुपाल्यम् । वणिज कर्म वाणिज्यम्, ब्राह्मणादित्वात्ष्यञ् ( गुणवचनब्राह्मणादिभ्य कर्मणि च ) । दूतवणिग्भ्याचेतिवक्तव्यात् ( वा० ) वाणिज्यापि । चात्कुसीदम् । ऋतामृताभ्या जावेत्तु मृतेन प्रमृतेन वा । सत्यानृताभ्यामपि वा न श्ववृत्त्या कथचनेति ये षड्वृत्तिभेदास्तानाह । ( सेवा ) शुन इव वृत्ति परपिण्डोपजीवितत्वादधमत्वं । न ऋतमनृत पापिष्ठत्वात्, प्रमृतमिति तु सभ्य पाठ । उञ्छ धान्यकणोच्चय – शिल धान्यमञ्जरी, समस्त व्यस्त विपर्यस्त वैतत्, वन्द्यत्वादृत सत्यम् ॥ २ ॥ मृत निर्जीवमिव । अमृतमनश्वरम् । किंचित्तस्य किंचिन्नास्त्य, अत्र मनु – ऋतमुञ्छशिल ज्ञेय स्यादयाचितममृतम् । मृत तु याचित भैक्ष्य प्रमृत कर्षण स्मृतम् ॥ सत्यानृत तु वाणिज्य तेनापि खलु जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्ता परिवर्जयेत् ॥ अर्यत स्म ऋण, ऋणमधमर्ण्ये इति ( सू० ) साधु । ( पर्युदञ्चन ) परित उदञ्चनमुत्तमर्णमुद्धारत्वेन ग्रहणम् ॥ ३ ॥ अर्थस्य प्रयोग कलान्तरण दानम् । कुत्सित सीदन्त्यत्र कुसीदम् । ( याचितक ) अपमित्ययाचिताभ्या कक्नौ ( सू० ) । विनिमयाद् भाण्डपरिवर्तनादागतमापमित्यक, मेङ् प्रणिदाने, उदीचामाङो व्यतीहारे ( सू० ), मयतेरिदन्यतरस्या ( सू० )

उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।
याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ४ ॥
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
कुसीदिको वार्धुषिको वृध्याजीवश्च वार्धुषिः ॥ ५ ॥
क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ।
क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि तत् ।
तिल्यतैलीनवन्माषोमाणुभङ्गाद् द्विरूपता ॥ ७ ॥
मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम् ।
बीजाकृतं तूप्तकृष्टे सीत्यं कृष्टं च हल्यवत् ॥ ८ ॥
त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ।
द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ।
खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥

---

इति ल्यप्- तुक्, तत आगतेऽर्थे, अपमित्ययाचिताभ्यां कन् ( सू० )। मुनिस्तु- निमयः परिवर्तः स्यादुद्धारोऽप्यापमित्यकः ॥ ४ ॥ उत्तम ऋणं उत्तमर्णः प्रयोक्ता, अधम ऋणं- अधमर्णो ग्राहकः, सुप्सुपेति ( सू० ) समासः । कुसीदं गृह्णाति कुसीदिकः, कुसीददशैकादशात् ष्ठन्ष्ठचौ ( सू० )। वृद्धिं गर्ह्यां प्रयच्छति वार्धुषिकः, प्रयच्छति गर्ह्यमिति ( सू० ) ठक्, वृद्धेर्वृधुषिभावः ( वा० )। ( वार्धुषिः ) लक्ष्यादिसन्तोऽपि, यन्मनुः- श्रोत्रियस्य कदर्यस्य वदान्यस्यापि वार्धुषेः । वृद्धिमाजीवति वृध्याजीवः । द्वैगुण्यस्य । वृद्धिर्लाभः कलान्तरम् ॥ ५ ॥ कर्षति कृषिकः, औणादिक इकः ( कृषिरृष्यो-किरन् )। कार्षकोऽपि । कृषिरस्त्यस्य कृषीवलः, रजःकृष्यासुतीति ( सू० ) वलच्, वले ( सू० ) इति दीर्घः । व्रीहीणां भवनं क्षेत्रं व्रैहेयं, व्रीहिशाल्योर्ढक् ( सू० ) ॥६॥ यवानां भवनं क्षेत्रं यव्यं, यवयवकषष्टिकाद्यत् ( सू० )। यवकोऽल्पयवः । षष्टिकाः षष्टिरात्रेण पच्यन्ते । उपाध्यायो यवादिभवने हितमिति पाठं परिकल्प्य प्रस्तावात्- यवोऽमित्यशुद्धं पठति । तिलानां भवनं क्षेत्रं, विभाषा तिलमाषोमाभङ्गाणुभ्यः ( सू० ) इति यत्खञौ । एवं माषादीनां द्विरूपता- माष्यं माषीणं, उम्यमौमीनं ( उमा-अतसी ), अणव्यमाणवीनं, भङ्ग्यं भाङ्गीनम् ॥ ७ ॥ मुद्गानां कोद्रवाणां च भवनं क्षेत्रं, धान्यानां भवने क्षेत्रे खञ् ( सू० )। आदिशब्दान्मासूरीणादि । शेषाणि व्रीह्यादिभ्योऽन्यानि । शाकक्षेत्रे तु- शाकशाकटं शाकशाकिनं, भवने क्षेत्रे शाकटशाकिनौ वक्तव्यौ ( वा० )। अबीजं सबीजं संपन्नं बीजाकृतं, कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ( सू० ) इति डाच् । आदौ उप्तं पश्चात् कृष्टं ( उप्तकृष्टं ), पूर्वकालैकेति ( सू० ) समासः । सीतया हलरेखया संमितं संगतं सीत्यं, नौवयोधर्मेति ( सू० ) यत् तथा संमिते यत् । हलेन कृष्टं हल्यं, मतजनहलात्करणजल्पकर्षेषु ( सू० ) इति यत् ॥ ८ ॥ त्रिगुणं कृष्टं क्षेत्रं त्रिगुणाकृतं, संख्यायाश्च गुणान्तायाः ( सू० ) इति डाच् । त्रिहल्यं त्रिसीत्यमपि प्राग्वत्, रपशीताहलेभ्यो यद् द्वौ तदन्तविधिः ( येनविधिस्तदन्तस्य )। सर्वं पूर्वं डाच्-यत्, द्वितीयाकृतं द्विहल्यं द्विसीत्यम् । शम्ब कृतं हि शब्दः इत्यन्ये विशेष इत्याहुः ॥ ९ ॥ द्रोणस्य वापः क्षेत्रं द्रौणिकं, उप्यतेऽस्मिन्निति वापः, तदस्य वापः इति ( सू० ) ठञ् । आदिशब्दात्प्रस्थादिभ्यः, संभवत्यवहरति पचतीति ( सू० ) इति प्रास्थिककादय । ( खारीकः ) खार्या ईकन् ( सू० )। खारप्रमितधान्यवापक्षेत्रम् ॥ १० ॥ उप्यतेऽस्मिन्निति वप्रम् । के जलं दारयति केदारः । क्षीयते धान्येन

सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ।
स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः ॥ १८ ॥
द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ।
क्षवः क्षुताभिजननो राजिका कृष्णिकासुरी ॥ १९ ॥
स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा ।
मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान् ॥ २० ॥
किंशारुः सस्यशूकं स्यात्कणिशं सस्यमञ्जरी ।
धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः ॥ २१ ॥
नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः ।
कडङ्गरो बुसं क्लीबे धान्यत्वचि पुमांस्तुषः ॥ २२ ॥
शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिम्बा त्रिपूत्तरे ।
ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥ २३ ॥
माषादयः शमीधान्ये शूकधान्ये यवादयः ।
शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥

---

ध्यते हरिमन्थः ॥ १८ ॥ तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ (वा०)। तैलः स्वल्पतिलः। क्षौत्य-
नेन क्षवः। क्षुतमभिजनयति क्षुताभिजननः। कृष्णवर्णत्वात् राजसर्षपाकारः। राजते राजिका। कृष्णा
वर्णेन, कर्षति विलिखति वा। अस्यते– असुरी, असुर्येव वा ॥ १९ ॥ कुत्सितं कलत्वाङ्ग्यते कङ्गुः,
कङ्गुः कङ्गुसंज्ञके। प्रीणाति प्रियङ्गुः। न तस्यते– अतसी। अवते– उमा, उङ् शब्दे। क्षौत्यनया
क्षुमा। न तोल्यते मातुलानी। भज्यते भङ्गा। शणोऽपि। अणुत्वात्कणत्वात्, अणति शब्दा-
यति वा। तुवरी लोके वर्णो निष्पत्ते श्यामाकः श्यामके च ॥ २० ॥ कुत्सितं शृणाति किंशारुः। शूकते
शूकम्। कणः सस्यस्य कणिशम्। धान्यस्यार्यद्दलः, शिलं च। धन्यते धान्यम्। स्तम्बं करोति स्त-
म्बकरिः, स्तम्बशकृतोरिन् (सू०)। शीर्णं शालेयं च। कुसूलो बलजः कोष्ठागारं धान्यादिकोष्ठकः।
तृणादेः स्तम्बो नालं, स गुच्छ्यतेऽनेनेति गुच्छः। यं प्रति स्तम्बोऽभिहितः सर्वस्यापि धान्यत्वेन
धार्यः। एवं सर्वशेषिदम् ॥ २१ ॥ अस्य गुच्छस्य नडः काण्डः– काण्ड(ड) यत्यनेन– सा नाडी, नड-
ति )ति। (नालं) णल गन्धे। स काण्डः पलालः, पलतीति। कडङ्गरशब्दाद्गृणाति, कड्(ड्) ङ्गरं रूप-
मस्य कडङ्गरः। बुस्यते– उत्सृज्यते बुसं तृणादिशेषः। तुष्यत्यनेनाग्निस्तुषः ॥ २२ ॥ शूकमेति शूकम्,
श्लक्ष्णं च तीक्ष्णाग्रं च तत्। सस्यवेष्टनत्वं कुशादिकण्टकोऽपि शूकः इति किंशारुरन्यत्र निर्देशः, शूक-
धान्यपर्यायीधान्यभेदार्थं वा पुनरुक्तः। शाम्यत्यनया सस्यं शमी। शिनोति शिम्बा। शाम्यः शिम्बिरित्यपि। शिम्बा-
कोशीधान्ये वाचस्पतिरिव। ऋद्धं समृद्धं गृहेः, ऋद्धं नगरमनन्तरे ऋद्धः। आवसितं रक्षार्थमाच्छादितं,
षम आच्छादनं, आ– अवसितं निश्चयनिषेके। पूयते स्म पूतं निर्बुषीकृतम्। बहु लाति बहुलं भार्यं,
तत्करोति, मार्जनं शोधितनिर्गमे ॥ २३ ॥ वर्णन्त इति शेषः। (माषादयः) आदिशब्दान्मुद्गमसूर-
दयः। (यवादयः) आदिशब्दाद् गोधूमशालयः। शाल्यते शालिः। कल्यते कलमः। आवश्यकामाल-
यास्त्वां कलमाः। षष्टिकाः षष्टिरात्रेण पच्यन्ते। आदशब्दात्कोद्रवादयः स्थलजाः। अमी इति पुंलि-
ङ्गनिर्देशान्मामात्राः शस्यन्ताः पुंसि ॥ २४ ॥ नियते निष्पन्ने गोधूमः, मुन्दमनृत्य, गोधूमान्त इति
(सू०) घम्। बहुवचनान्तमप्यादरसोऽपि। गो(त्रि)अम्लानि निर्धमने गोधूम इति कुल्माषम्। अपो-
मस्य– अपार्द्धं, अपे निरीक्षेके पेशुः। मुद्गान्ते धान्येनेन सुप्रम्। कर्त्रे रा काति (उद्गलमुपसर्गे)

तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका ।
अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥ २५ ॥
प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान् ।
स्यूतप्रसेवौ कण्डोलपिण्डौ कटकिलिञ्जकौ ॥ २६ ॥
समानौ रसवत्यां तु पाकस्थानमहानसे ।
पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवाः ॥ २७ ॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।
आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ २८ ॥
अश्मन्तमुद्धा( द्धा )नमधिश्रयणी चुल्लिरन्तिका ।
अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥
हसन्यप्यथ न स्त्री स्यादङ्गारोलातमुल्मुकम् ।
क्लीबेऽम्बरीषं भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम् ॥ ३० ॥
अलं( लिं )जरः स्यान्मणिकः कर्कर्यालूर्गलन्तिका ।
पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयोः ॥ ३१ ॥

---

उदूखलोल्वणवत् पृषोदरादित्वात् ( सू० ) उभयम् ॥ २५ ॥ प्रस्फोट्यतेऽसारं बहिः क्रियतेऽनेन प्रस्फोटनम् । शायते शीर्यते वानेन शूर्पं, शूर्प माने वा । चाल्यतेऽनेनेति चालनं, कात्य.– क्षुद्रच्छिद्रसमोपेतं चालनं तितउ स्मृतः । तनोति सारं तितउः, तनोतेर्डउ सन्वच्च ( उ० ) । परिपवनं च । समानावित्येव । सीव्यते स्म स्यूतं, वस्त्राद्यावपनं च । प्रसीव्यते प्रसेवकः । कण्ड्यते कण्डोलः । पिण्ड्यते पिण्डः, वंशदलादिमयं भाण्डम् । पिटकोऽपि । कटत्यावृणोति कटः । क्लिश्यते क्षिप्यतेऽस्मिन् किलिञ्जं, वीरणतृणादिमयं कुणालाख्यम् ॥ २६ ॥ रस आस्वादोऽस्त्यस्यां रसवती । महदनोऽस्य महानसं, अनसा पाककरणं लक्ष्यते, अनोऽश्मायःसरसामिति ( सू० ) समासान्तष्टच् । पुरो गौः सोऽस्य जल वाऽस्याः पुरोगुस्तस्याः रसवत्या अयं पौरोगवः । सूपं कुर्वन्तीत्युपलक्षणं मात्रकं दे । ( वल्ल )वल्लि. सौत्र. प्रीत्यर्थं ॥ २७ ॥ ( आरालिकाः, इ० ) अरालमन्धः ओदनं च पण्यमेषाम् । सूदयन्ति तण्डुलान्सूदाः । गुणयन्ति गुणाः । भक्ष्यकाराश्च । अपूपाः कन्दुश्च पण्यमस्य, इसुसुक्तान्तात् ( सू० ) कः, कान्दुक इति न्याय्यम् । खरविशदमभ्यवहार्यं भक्ष्यम् । पौरोगवाद्या वाच्यलिङ्गाः ॥ २८ ॥ अश्मनोऽन्तमश्मन्तम् । उद्ध(ढ)न्ते( ति ) उद्धा (द्धा)नम् । अधिश्रीयतेऽनयाधिश्रयणी, श्रिञ् पाके । चुल्ल भावकरणे समर्च्चुदेशः चुल्लिः । अन्तोऽस्त्यस्यामन्तिका, अन्त्यधिश्रयणी भवेदिति माला । अङ्गारा धीयन्तेऽस्यामङ्गारधानी समाति । हसन्त्यङ्गारैर्हसन्ती ॥ २९ ॥ अङ्गत्यङ्गारः, अङ्गि गत्यर्थं तिथि. । अलन्ति वारयन्त्यन्धकारं न लान्ति वा ( अलातम् ) । उल्कां मुखे स्युसुग्मर्धदग्धं काष्ठं, उलति वा, उलि. सौत्र. । अम्बते ध्वनतेऽम्बरीषम् । भृज्ज्यतेऽत्र भ्राष्ट्रम् । वैयेति कन्दुर्ना पुमान्, पक्षे स्त्री, कन्दत्यनया कन्दुः । स्वेद्यते स्वेदनी ॥ ३० ॥ अल जायेऽलंजरो महाकुम्भः । मणन्त्यस्यां स्थिरमम्भो मणिकः । किरत्यम्बु कर्करी । आलान्याल्वः, अट उपमेस्माद्दपूर्ता । गलत्यम्भोऽस्या गलन्तिका, वर्धनीत्यर्थः । पि( पे )ठति पिठरः पिठरी च, पिठ अवयवे । तिष्ठत्यस्यां स्थाली । स्थाल्यं कुम्भी च । ओख्यगुखा । कुण्ड्यते पच्यतेऽस्मिन्कुण्डं कुण्डी च । क लाति कलशी वा कलशः ॥ ३१ ॥ घटते घटः । कुटति यो यम्भसा वा कुटः । निषिञ्चत्यस्मान्निपः । शीर्यमाणमवति शरावः । वर्धते मृत्पिण्डादूर्ध्वते छिद्यते वा चक्रवर्धमानकः । वाला जिरोऽपि । अर्च्यते पात्रोऽल्पः दूर्वाङ्कैः कोऽमिति तान्त्रिकाः, ऋजिभृजी भर्जने । पिष्ट( ? ) भृश पच्यतेऽस्मिन् पिष्टपचनम् । काम्यतेऽस्मात्कंसः ।

घटः कुटनिपावस्त्री शरावो वर्धमानकः ।
ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम् ॥ ३२ ॥
कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् ।
सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम् ॥ ३३ ॥
दर्विः कम्बिः खजाका च स्यात्तर्दूः( र्दू )र्दारुहस्तकः ।
अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका ॥ ३४ ॥
कडम्बश्च कलम्बश्च वेसवार उपस्करः ।
तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ ३५ ॥
मरीचं कोलकं कृष्णमूषणं धर्मपत्तनम् ।
जीरको जरणोऽजाजी कणा कृष्णे तु जीरके ॥ ३६ ॥
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।
आर्द्रकं शृङ्गवेरं स्यादथ छत्रा वितुन्नकम् ॥ ३७ ॥
कुस्तुम्बुरु च धान्याकमथ शुण्ठी महौषधम् ।
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥

---

चषको मल्लिका पारी च ॥ ३२ ॥ कुत्सितं तनोति कुतूः । कृत्तेश्चर्मणः ( स्नेहपात्रम् ) । ह्रस्वा कुतूः कुतुपः, कुत्वाड्डुपच् ( मू० ) । आ- उप्यते- आवेशनमस्मिन्नावपनम् । भण्ड[ य ]त्यनेन भाण्डम्, मडि परिभाषणे । पाल्यतेऽनेनेत्यस्माद्वा पात्रम् । अम सर्वेषयत्यमत्रम् । भज्यतेऽस्मिन्नेव भाजनम् । भाण्डावपने पृथगाहुः, यन्मुनिः- अट्टिकादि तु यद्भाण्डं सर्वमावपनं विदुः ॥ ३३ ॥ दृणाति पाकं दर्विः । काम्यते कम्बिः । खजति मथ्नाति खजाका । ततं तुदति व्यथयति तर्दूः, तनोति वा । दारुमयो हस्त इव दारुहस्तकः, दर्व्यादित्रयम् । शक्नोति देहं शक्यतेऽनेन वा भोक्तुं शाकम् । हरितकं नीलत्वात् । श्यति शिग्रुः, द्वयर्थे शिग्रुः शोभाञ्जनं हरितकविशेषश्च ॥ ३४ ॥ अस्य शाकस्य नाडी, कडति के लम्बते वा कडम्बः ( कलम्बः ), शाकविशेषद्वयेके, प्रकृते शिग्रु( च )डशाकस्य दण्डः । कडत्वी वा । वेसं व्याप्ति वृणोति वेसवारः । जाघनकंकुमदिना नागवल्ल्यादिना उपस्करः, उपस्करे च ( मू० ) इति सुट् । उद्वेदान् ह । तिन्तिडीति तिन्तिडीकम् । चुक्र, चुक व्यथने । वृक्षस्याम्लं वृक्षाम्लमम्लमाहुः । वेल्लवेगवदे जायते वेल्लजं, वेल्लम्बः शार्ङ्गेयके ॥ ३५ ॥ म्रियते जिह्वानेन मरीचम् । कोलत्वात्कोलकं, कुड बाल्ये । कृष्णवर्णेन कर्षति देहं नाडी । ऊषति दहति- ऊषणम् । धर्मपत्तने भवं धर्मपत्तनम् । आह च- मरीचं कथितं स्थाने वेल्लजं इत्याशुपत्तनम् । मरीचं शिखरं कोलकं धर्मपत्तनम् ॥ जीर्यतेऽनेन जीरकः । जरयतीति जरण इति सम्प्राः । अजं क्षिपति अजाजी, स्त्री । कणाः सन्त्यस्याः कणा, अर्शआदित्वादच् ( मू० ) । कणा कृष्णा तु जीरके वेदुः ॥ ३६ ॥ सुष्ठु सुवति प्रेरयति दोषान् सुषवी । कारोऽस्यास्ति कारवी । पृथ्वी वृहत्पत्रा । काला वर्णेन । उपकुञ्चयन्ती दोषानुपकुञ्चिका । आह च- उपकुञ्चिका च कालिका चोपकुञ्चिका । सुषवी कुञ्चिका कृष्णा पृथ्वीका कृष्णजीरके ॥ ( आर्द्रक ) आर्द्रात्कन्प्रत्ययः ( मू० ) । शृङ्गैः शिखरैर्वेरं देहोऽस्य शृङ्गवेरम् । आह च- महौषधं शृङ्गवेरं कटुभद्रं तथार्द्रकम् । छत्त्रमिव, छादयति देहमिति छत्रा । वितुद्यते मन्दाग्नित्व वितुन्नकम् ॥ ३७ ॥ कुं भूमिं तुम्बति कुस्तुम्बुरु, तुबि तुबि अर्दने, पारस्करादित्वात्सुट् ( मू० ) । धन्यमर्हति धान्याकं, अहुचा धन्यक च । शुण्ठति शुष्यति शुण्ठी । नगराख्ये देशे भवं नागरम् । विश्वभेषजमनेकदोषजित् । विश्व विश्वा च भेषजम् ॥ ३८ ॥ आरनालो मण्डं तक्रमारनालम् । कुल्माषेषु प्रसो

आरनालकसौवीरकुल्माषाभिषुतानि तु ।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्चि( ञ्जि )के ॥३९॥
सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम् ।
तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः ॥ ४० ॥
निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।
सामुद्रं यत्तु लवणमक्षीवं वशि( सि )रं च तत् ॥ ४१ ॥
सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे ।
रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम् ॥ ४२ ॥
सौवर्चलेऽक्षरुचकं तिलकं तत्र मेचके ।
मत्स्यण्डी फाणितं खण्डविकारे शर्करा सिता ॥ ४३ ॥

---

भत्र सौवीरम् । ( अभिषुत ) षुञ् अभिषवे, अस्माद्वा पृथक् कुल्माषाख्या नास्ति, चेद् भीमवत् स्यात् । कुल्मार्षैर्यवादिभिरभिनरभिषूयत परिवास्यते स्म कुल्माषाभिषुतम् । अवन्तिषु सूयते– अवन्तिसोमम् । कुञ्जं लाति कुत्सित जलमस्य वा कुञ्जलम् । कञ्ज( च )यति दीपयत्यग्निं बध्नाति दोषान्वा काञ्चिक, काञ्च्या पुरि भवं वा । आह च ( धन्वन्तरिः )– काञ्चिकं कञ्जिकं वीरं कुल्माषाभिषुतं तथा । अवन्तिसोमं धान्याम्लमारनालं महारसम् ॥ सौवीरकं सुवीराम्लं तथा शुक्तं तुषोदकम् ॥३९॥ सहस्रं बहु विध्यति सहस्रवेधि । जायते जतुकम् । बह्लीकरामठ कुरुदशौ । हिनोति हिङ्गु । अयुग्रं भूतनाशनमगूढगन्धं च । तस्य हिङ्गोः पत्री, करोतीयं कारवी सरस्त्री । बाष्पं सवति बाष्पिका । कबर्याकृतिः कबरी, कर्वरीति च पाठभेदः ॥ ४० ॥ निशाख्या रात्रिपर्याया नानार्थे रजनीत्वात् । काञ्चनवर्णा काञ्चनी । हरि पीतं वर्णं द्रति ( गच्छति ) हरिद्रा । वरा वर्णोऽस्याम्या वरवर्णिनी । आह च– हरिद्रा पीतिका पिङ्गा र( र )जनी रजनी[ काञ्चनी ] निशा । गौरी वर्णवती पीता हरिता वरवर्णिनी । लुनाति जाड्यं लवणं, नन्द्यादित्वाल्ल्यु (सू॰), णत्वं च । अक्ष्णोति व्याप्नोति– अक्षीवम् । उश्यते वशिरं, वश कान्तौ ॥ ४१ ॥ सिन्धुनद्युपलक्षिते देशे भवं सैन्धवम् । शीतं शिनोति शीतशिवं, उष्णवीर्यत्वात् । मणिबन्धगिरौ भवं मणिमन्थम् । मणिमन्त( न्थ ) माणिमन्थं बाहुः । आह च– सैन्धवं स्यात्तु सिन्धूत्थं नादेयी ( य ) सिन्धुजं शिवं । शुद्धं शीताशिवं चान्यन्माणिमन्थं शिलात्मकम् ॥ रुमायामाकरे भवं रौमकम् । वसुगन्धि वसुकं नाम लवणं, रौमके वसुकं वदेदिति माला । पाके भवं पाक्यं पक्तव्यं वा क्षारलवणम् । बिलति भिनत्ति मलं बिडम् । कृतकस्य लवणस्य द्वे नामनी. पाक्यबिडलवणयोर्भेदेऽपि कृतकत्वादैक्यम् । स्यर्थे पाक्यं बिडलवणं यवक्षारः काचश्चेति ॥ ४२ ॥ सुवर्चलाप्रदेशे भवं सौवर्चलं, सुवर्चस्येदमग्निदीपनं लाति वा, वर्च दीप्तौ, अच । अक्ष्णोति व्याप्नोत्यक्षम् । रोचतेऽनेन रुचकम् । हृद्यगन्धं च । तिलति स्निह्यति तिलकम् । तत्र तस्मिन्मेचके कृष्णे लवणे वर्तते, पूर्वं तु मधु( र )लवणम् । अगन्धं कृष्णलवणं तिलकमित्येके, यद्वैद्याः– कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिते । मत्स्यन्दते मत्स्यण्डी सामान्यशर्करा, मत्स्यानमति रुजति मत्स्य( त्स्या )ण्डीति वैद्याः, यद्धन्वन्तरिः– शर्करोक्ता तु मीनाण्डी श्वेता मत्स्याण्डिका सिता । मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तरा इति तु वाह( भ )ट. । फाण्यते द्रवत्वत्यागेन खण्डश्वेता । क्षौद्रकं तिक्षुरसविकारः खण्डवत् । शीर्यते शर्करा । सायते सिता खण्डशर्कराख्या ॥४३॥ कूर्चं दन्त(क)मस्तु तदस्यस्याः कूर्चिका, कुचाने कूचिका कुचीकेत्यके स्निग्धा किलाटिका । रसमलाति रसाला । मृज्यते मार्जिता दधिसितामरीचादिकृत लेह्य, यत्सूदशास्त्रम्– अर्धा-

मिस्सटा वधिका सर्वरसाग्रे मण्डमस्त्रियाम् ।
मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥
यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
गव्यं त्रिषु गवां सर्वं गोविड् गोमयमस्त्रियाम् ॥ ५० ॥
तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् ।
पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् ।
तत्तु हैयंगवीनं यद् ह्योगोदोहोद्भवं घृतम् ॥ ५२ ।
दण्डाहतं कालशेयमरिष्टमपि गोरसः ।
तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥
मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः ।
अशनाया बुभुक्षा क्षुद् ग्रासस्तु कवलः पुमान् ॥ ५४ ॥

निस्रावः ॥ ४९ ॥ यूयते पिष्टादिना यवागू, स्रयुवचिभ्यइत्यागूच् ( उ० ) । सञ्जितोष्ण – उष्णिका, ब्राह्मणकोष्णिकेसंज्ञायाम् ( सू० ) । श्रायते श्राणा, श्रा पाके । विलिम्पति विलेपी । तरला लेह्यत्वाच्चपला । स्नेहाभ्यञ्जने तैल कृशर[ स ]स्तु तिलौदन. । गोरिद गवि भवमित्यादिष्वर्थेषु गव्यं क्षीरादि, सर्वत्रगोरजादिप्रसङ्गेयत् ( वा० ) । गोविट् गोविड् गोमय च गोश्च पुरीषे ( सू० ) मयट् ॥ ५० ॥ करोत्यग्निं करीषं शुष्कगोमयम् । दुह्यते दुग्धम् । घस्यते( अद्यते ) क्षीरम्, घसेः किच्च ( उ० ) इतीरन्, गमहनजनेति ( सू० ) उपधालोप, खरि च ( सू० ) इति चर्त्वम्, शासिवसिघसीनां च ( सू० ) षत्वम् । पीयते पयते वा रसत्वात्पय , असुन् । सममिति पयसो नपुंसकत्वार्थम् । पयसो विकार पयस्य, गोपयसोर्यत् ( सू० ) । आ दिशब्दान्नवनीतादि । दृप्यति ( अनेन ) द्रप्सम् । घनादन्यद्घनमित्यर्थ., यन्माला द्रप्सं दध्यघन तथा । एतच्च द्रप्स शरानिति भागुरिपाठे सरमिति बुद्ध्वा मालाकारो भ्रान्त । केचित्तु नाशिना इत्ययमपि मालापाठेन विरुध्द , यदाह दुर्गः– वाणद्रप्सौ शरावपि । इत्य तु समर्थ्यं, तरत्– उपरि प्लवमान घन दधि द्रप्सम् ॥ ५१ ॥ जिघर्ति घृतम् । आ– अज्यतेऽनेनेत्याज्यम्, आङ्पूर्वादञ्जे संज्ञायांक्यप् ( वा० ) । हूयते हवि , हविष्य च । सर्पति सर्पि , इसन्नौ । दध्नो मथितान्नवं तत्काल नीतमुद्धृतं नवनीत घृतयोनि । ह्योगोदोहस्य विकारो हैयङ्गवीन, हैयङ्गवीनसंज्ञायां ( सू० ) इति साधु । कात्यो नवनीतमेवाह ॥ ५२ ॥ मन्थदण्डेनाहतं दण्डाहतम् । कलश्या गर्गर्यां भव कालशेयम् । न रिष्यति हिनस्ति– अरिष्ट, सर्वरोगजित्त्वात् । नद्विशेष नाह । तद्यात्र द्रुत गच्छति तक्र चतुर्भागाम्बु । उदकेन श्वयति– उदश्विदर्धाम्बु । दध्नो मस्तुमात्रताम्य मथित निर्जलम् । द्विगुणाम्बु श्वेतरस्यं वोदकमुदश्वितम् । तक्र त्रिभागमिताम्बु केवल मथितं स्मृतमिति धन्वन्तरि ॥५३॥ दध्नो मण्ड द्रवो भाग, मस्यति परिणमते मस्तु । पीयते पीयूष , नवप्रसूतगवादिक्षीर क्वथित सत् । अशनेच्छा– अशनाया, अशनायोदन्येति ( सू० ) साधु । भोक्तुमिच्छा बुभुक्षा । क्षुत्, क्षुध बुभुक्षायाम् । रोचके त्री रुचिश्च । ग्रस्यते ग्रास । के तालुनि वलते कवल ॥ ५४ ॥ सहपान सपीति । सहादन सग्धि , क्तिन्, बहुलंछन्दसि ( सू० ) इति घस्लृ, घसिभसोर्हलि च ( सू० ) इत्युपधालोप , झलोझलि ( सू० ) इति सलोप, झषस्तथोर्धोऽध ( सू ), झलाञ्जशोऽन्ते ( सू० ) । उदकेच्छा उदन्या, अशनायोदन्येति ( सू० ) साधु । तर्षण तृट् तर्षश्च, ञितृष पिपासायाम् । तृष्णा नानार्थे । अदन जग्धि. अदोज-

सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ।
उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम् ॥ ५५ ॥
जेमनं लेह आहारो निघसो न्याद इत्यपि ।
सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥
कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥
गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे ।
गोमान्गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ५८ ॥
त्रिष्वाशितंगवीनं तद् गावो यत्राशिताः पुरा ।
उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥ ५९ ॥
अनड्वान्सौरभेयो गौरुक्ष्णां संहतिरौक्षकम् ।
गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके ॥ ६० ॥
वृषो( उक्षा )महान्महोक्षः स्याद् वृद्धोक्षस्तु जरद्गवः ।
उत्पन्न उक्षा जातोक्षः सद्योजातस्तु तर्णकः ॥ ६१ ॥

---

पिपासेति ( सू० ) ॥ ५५ ॥ जमेर्जेमनमाहुः, जमनं जवनं वा, यद् दुर्गः– जवनं भोजनं केचित् । न्यदन निघसः, नौ णच ( सू० ) इत्यप्, घञपोश्च ( सू० ) इति घस्लादेशः । णे ( नौ णच ) न्यादः । प्रत्यवसानमभ्यवहारश्च । सुहितस्य भावः सौहित्यम् । फलति विशीर्यते फेला, फेल्ल चलने- त्यस्माद्वा ॥५६॥ काम्यते कामम् । पर्याप्तिः पर्याप्तम् । इष्यत इष्टम् । ईप्सितमनतिक्रम्य यथेप्सितम् । प्रथमः क्रियाविशेषणान्येतानि क्तवदव्यय वे- एतेषां स्त्रीभोजो भ्रान्तः, यच्छाश्वतः–कामे निकामे कामा- र्थेया । गाः पाति गोपः । गाः संख्याति गोसंख्यः । गा दोग्धि गोधुक् । आ–अभि ईरयति–आभीरः । वल्लयति गा वल्लवः, वल्लिः सौत्रो वा ॥ ५७ ॥ पादे बन्धनमस्य पादबन्धनम् । आदिशब्दात्खरादि । यादवं धनमित्येके केचित् । गावः सन्त्यस्य गोमी, ज्योत्स्नादिभ्य इति ( सू० ) साधुः । व्रजन्त्यस्मिन्व्रजः- गोसम्बन्धी समूहः, गोचरसंचरेति ( सू० ) साधुः । धन च ॥ ५८ ॥ आशिता भोजिता गावो यत्राशितं- गवीनं, अषडक्षाशितङ्ग्वलङ्कर्मेति ( सू० ) स्वार्थे खः । आशितंगवीनमिति प्राच्यानां भ्रमः यथाह्स्वन्– गावो यत्राशिताः पुरेति ।, उक्षति– उक्षा । भन्दते भद्रः । बलीवर्दते बलीवर्दः । ऋषति गच्छति ऋषभः ॥ ५९ ॥ अनो वहत्यनड्वान्, अनसि वहेः क्विबनसो डश्च ( उ० ) । सुरभेरपत्यं सौरभेयः । गच्छति गौः । अवान्तरभेदोऽस्य न विवक्षित । उक्ष्णां समूह औक्षकम् । ( औक्षक )गोत्रोक्षोष्ट्रेति (सू०) वुञ् । संहतिरित्येव । (गव्या, गोत्रा) खलगोरथादिति ( सू० ) यः, इनित्रकट्यचश्चेति ( सू० ) त्रः । वत्सानां समूहो वात्सकं, गोत्रोक्षोष्ट्रेति ( सू० ) वुञ् । धेनूनां समूहो धैनुकम्, अचित्तहस्तिधेनोष्ठक् (सू०)॥६०॥ महांश्चासावुक्षा च महोक्षः, अचतुरविचतुरेति (सू०) साधुः । एवं वृद्धोक्षजातोक्षौ । मालाया– महोक्षः स्यादुक्षतरे स्कन्धवाहः स्कन्धवाहकः । ककुद्मान् षड्दशनो वृद्धः कूटो भग्नविषाणकः ॥ जरंश्चासौ गौश्च जरद्गवः, गोरतद्धितलुकि ( सू० ) इति टच् । तृणोपाति केवलं तर्णकः ॥ ६१ ॥ ... ... , ... ( सू० ), ... ( वा० ) । वसति वत्सः । दम्यः । वत्सत्वं तनुत्वमस्य वत्सतरः, वत्सोक्षाश्वर्षभेभ्यश्च ( सू० ) इति ष्टरच्, तनुत्वं द्वितीयवयः- प्राप्तिः । ( आर्षभ्यः ) ... , ... , अत एव ... प्रतिकृतिरार्षभ्यः, ...-

उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः ।
करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ॥ ७५ ॥
अजा छागी शुभच्छागबस्तच्छगलका अजे ।
मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके ॥ ७६ ॥
उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।
चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ॥ ७७ ॥
वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥
विक्रेता स्याद्विक्रयिकः क्रायकः क्रयिकः समौ ।
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥
नीवी परिपणो मूलधनं लाभोऽधिकं फलम् ।
परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥

ल्मस्यबन्धनकरभइति ( सू० ) कन् । विकारे नित्यवृद्धशरादिभ्य ( सू० ) इति मयटा दारुमयैरिति भवितु युक्तम् ॥ ७५ ॥ अजति गच्छति व्यय मर्श उत्वादजा, अजाद्याटाप् ( सू० ) । छयति रोगं छागी, जातेरस्त्रीविषयादयोपधात् ( सू० ) इति ङीष् । स्त्रीविषयप्रत्ययार्थं पृथक्पठ । शोभते शुभः, शु( तु )भो निघण्टुषु । बस्ते बस्त । छयति रोगाश्छाग , छगलश्च । छागोऽपि । मेहति मेढ्रः । उरु भ्राम्यति- उरभ्र , उच्चै रभते वा, उ स्वरप्रतिरूपको निपात । एवमुचे रणोऽस्येत्यु णः, उरण्यति देवत प्रीणातीति श्रीभोज कण्ड्वादिपाठ त् । ऊर्णा स्त्यस्ये र्णायु , ऊर्णाय युस् ( सू० ) । मेषति शशते मेष , पचाद्यच् ( नन्दिग्रहीति ) । वर्षति वृष्णि । आ-ईड्यन्ने देवा अनेन एडक । हुडुश्च । अविर्नान र्थे ॥ ७६ ॥ ( औष्ट्रक, इ० ) गोत्रोक्षोष्ट्रोरभ्रेत्विुञ् ( सू० ) । चक्रमस्त्यस्य तैलिकादिचक्रभ्रमणाच, आसन्दीवदष्ठीवच्चक्रीवदिति ( सू० ) मधु । चक्रवालस्तु बालेय इति माला । बालेभ्यो हितो बालेय , वाले वा[ च ]गने भवो वा । रासते रासभ , रास शब्दे । गर्दति गर्दभ:, गर्द शब्दे । ख शब्द राति खर:, खमस्त्यस्य वा, ( रप्रकरणे ) खमुखकुञ्जेभ्योर ( वा० ) । क्रूरोऽपि, शङ्कुकर्णोऽपि । षड्- द्वित्रयो पशुभ्य. षड्गवमथ गोयुग च परं, यथा मेषषड्गव गोगेयु म्, पशुनामभ्योद्वित्वेगोयुगच् ( वा० ), षट्त्वेषड्गवच् ( वा० ) । अविसोढमविमरीस तथाविदुस पयो मेष्य , अवेर्दुग्धे- सोढदूसमरीसचो वक्तव्या ( वा० ) ॥ ७७ ॥ विदेहे- उपचये भवो वैदेहक । सार्थान्सधनान्सरतो वा पान्थान्वहति सार्थवाह । निगमे- आपणे भवो नैगम । पणते वणिक् । वणिगेव वाणिज , प्रज्ञादित्वा त्स्वार्थेऽण् ( सू० ) । आपण प्रयोजनमस्यस्यापणिक । क्रयविक्रयाभ्या जीवति क्रयविक्रयिक , वस्नक्रयविक्रयाट्ठन् ( सू० ) इति सघातविगृहीतात्ठन् ॥ ७८ ॥ विक्रीणीते भाण्डेन मूल्यं गृह्णाति विक्रेता । क्रीणाति मूल्येन भाण्डं क्रायक । क्रयेण जीवति क्रयिक । वणिजो भावो वाणिज्यं, ब्राह्मणादित्वात्ष्यञ् ( गुणवचनब्राह्मणादिभ्य कर्मणिच ) । ( वणिज्या ) दूतवणिग्भ्यांचेति वक्तव्यायच ( वा० ) । मूले नानाम्य मूल्यं, नौवयोधर्मेति ( सू० ) यत् । वसत्यस्मिन्पण्यं वस्न । अवक्रीयतेनेनावक्रय ॥ ७९ । नीविर परहस्तेऽर्प्यमाणत्वात् । परिपण्यते व्यवहर्तुं प्रयुज्यते परिपण । मूलं लाभकारणम् । मूलधनादधिकं निष्पन्न स लाभ. फल च । कलान्तरादि । परिवर्तदान परिदानम् । निमये परिवर्तनीये भवो नैमेय. निमानं निमयः, मेङ् प्रणिदाने ॥ ८० ॥ उपसृत्य समीप निधीयते सुमे स्थाप्यते- उपनिधि:, उ

प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ॥ २४६ ॥
प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि ।
यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥ २४७ ॥
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।
वृथा निरर्थकाविध्योर्नानानेकोभयार्थयोः ॥ २४८ ॥
नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ।
प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ २४९ ॥

---

प्रद्युम्नः कृष्णा[ णं ]प्रति । वीप्सायाम्– वृक्षं वृक्षं प्रति सिञ्चति । लक्षणे– वृक्षं प्रति विद्योतते विद्युत् । आदि-शब्दादित्थंभूताख्यानादौ– साधुर्मैत्रो मातरं प्रति । भागे– यदत्र मां प्रति स्यात्तद्दीयताम् । प्रति-दाने– माषानस्मै तिलेभ्यः प्रति प्रयच्छति । हेतौ– इन्तीति पलायते । प्रकरणे प्रकारः– गौरश्वो हस्तीति जातिः ( भाष्य० ) । प्रकर्षे– इति पाणिनिः, पाणिनिशब्दः प्रकर्षोत्पत्ति( द्यो )तक इत्यर्थः । अत एव प्रकारा( द्या )दीनि केचित् । आदिशब्दादेवमर्थे– इत्यादयो नारद इत्यबोधि सः ( शिशु० ) । मते– इत्यापिशलिः । विवक्षानियमे– तदस्यास्त्यस्मिन्निति मतुप् ( पाणिनिसूत्र ) । स्वरूपे– वृद्धिरित्ययं वा वृद्धिः । समाप्तौ यथा– अ अ इति । प्रत्यक्षे शब्दे निश्चयावधारणे च ॥ २४६ ॥ प्राच्याम्– पुरस्तात्सूर्य उदेति । प्रथमे– पुरस्तात् भुङ्क्ते । पुरार्थे इति– पुरस्तादासीद्भूत् । अग्रतोऽर्थे– पुरस्तात्सेनानीर्यातीति । आदिशब्दात्पूर्वदेशे काले च– पुरस्ताद्द्वारम्, पुरस्तात्कृतम् । साकल्ये यथा– यावत्कार्यं तावत्कुरु, सकलं कुर्वित्यर्थः । अवधौ– यावद्गन्ता तावत्तिष्ठ । माने– यावद्दत्तं तावद्भुक्तम् । अवधारणे– यावदमत्र ब्राह्मणानामन्त्रयस्व ॥ २४७ ॥ मङ्गले– अथ परस्मैपदानि । अनन्तरे– स्नात्वाथ भुङ्क्ते । आरम्भे– अथ शब्दानुशासनम् । प्रश्ने– अथ शक्नोषि भोक्तुम् । कार्त्स्न्ये– अथ कृत्स्नं ब्रूमः । अधि-कारेऽपि– अथ स्नानविधिः । प्रतिज्ञायाम्– अथ होमस्तावदिति व्रतः । अन्वादेशेऽपि– अथो इम वेदमध्यापय, अथो एनं छन्दांसि । समुच्चये द्वौ– अथो धनञ्जयः, भीमोऽथार्जुनः । निरर्थके– वृथा दुग्धोऽनड्वान् । अविधौ– अतिभाष्यं वृथा दानमाक्षिकं शौल्किकं च यत् ( मनु० ) । अनेकार्थे– नानाविधा जनाः । उभ-यार्थे– नानास्त्रस्त्रवर्षैः सञ्चयः । विनार्थेऽपि– नाना नारीर्निष्फला लोकयात्रा ॥ २४८ ॥ प्रश्ने– को नु धावति । विकल्पेऽपि– भीमो नु फाल्गुनो नु योद्धा । वितर्के– अहिर्नु रज्जुर्नु । पश्चादर्थे– तमनु धावति । सादृश्ये अनुकारः । लक्षणादौ च– वृक्षमनु द्योतते । तत्त्वाख्याने– साधुर्मैत्रो मातरमनु । भागे– यदत्र मामनु स्यात्तद्दीयताम् । वीप्सायाम्– वृक्षं वृक्षमनु सिञ्चति । दैर्घ्ये– अनुगङ्गं वाराणसी । प्रश्ने– ननु गच्छसि । अवधारणे– नन्वयं गच्छतः । अनुज्ञायाम्– नन्वादिश । अनुनयामन्त्रणे– ननु वदिह नयोद मे । वाक्यारम्भादौ च– नन्वपोढः मनु( सू )यते । आक्षेपे– ननु किमर्थमागतोऽसि । प्रत्युक्ति-प्रश्नार्थाः कटं चेय, ननु करोमि भोः ॥ २४९ ॥ गर्हायाम्– अपि सिञ्चेत्पलाण्डुम् । समुच्चये– भीमोऽर्जुनोऽपि । प्रश्ने– अपि याति । इष्टप्रश्नेऽपि– अपि क्रियार्थं सुलभं समित्कुशम् ( कु० सं० ) । शङ्कायाम्– अपि नशीदेत् । सम्भावनायाम्– पर्वतमपि शिरसा भिन्द्यात् । अपेक्षादौ च– अपि गृह्णीयां वे[ वे ]दम् । पदार्थे– सर्पिषोऽपि स्यात्, मधुनः स्तोकं वा । उपमानो आशीर्विषो वा संभूतः सूर्यो धन-प्रतिनिर्भः । भीमेन्द्रादो वा समरे गदाधारिणिदृष्टवत् ॥ विकल्पे– पदैर्महीदिमिर्वा यजेत् । द्वे द्वे समुच्चयेऽत्र एव– सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ( कु० सं० ), न तुराषाडयं, वायुरेव मेदसोम

गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।
उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ २५० ॥
अमा सह समीपे च कं वारिणि च मूर्धनि च ।
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ॥ २५१ ॥
तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ।
नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ २५२ ॥
अल भूषणपर्याप्तिशक्तिवारणवाचकम् ।
हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ॥ २५३ ॥
पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ।
स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ॥ २५४ ॥
ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ।
स्वर्गे परे च लोके स्ववार्तासंभाव्ययोः किल ॥ २५५ ॥

---

दहनो वा । अर्धे- सामि समीलिताक्षी । जुगुप्सिते- सामि कृतमकृतं स्यात् ॥ २५० ॥ सहार्थे- पुत्रेणामा भुङ्क्ते । समीपे- अमा भवोमात्य॰ । जले- कंजं पद्मम् । मूर्ध्नि- कंजा केशा । निन्दासुखयोश्च- कंदर्पः, कंयु । इवार्थे- अग्निरेवं विप्र । इत्थमर्थे- एवंवादिनि देवर्षौ ( कु॰ सं॰ ) । उपदेशादौ च- एवं पठ । निर्देशे- एव तावत् । विश्वये- एवमेनत् । अङ्गीकारे- एवं कुर्म॰ । तर्के- नूनं शरत्कुल्ला हि काशा॰ । अर्थनिश्चये- नून हन्तास्मि रावणम् ॥ २५१ ॥ तूष्णीमर्थे- जोषमास्स्व । सुखे- जोषमास्ते जितेन्द्रिय । प्रश्ने- किं गतोस । जुगुप्सने- किंराजा यो न रक्षति, किम.क्षेपे ( सू॰ ) इति समासान्ताभाव॰ । प्राकाश्ये- हिमालयो नाम नगाधिराज ( कु॰ सं॰ ) । संभाव्ये- कथं नाम समेष्यति । स्मृतिः संभावनैव- स नामाय बन्धु । क्रोधे- ममापि नाम दशानस्य परे परिभव॰ । उपगम॰ सासूयोऽङ्गीकार॰- एवमस्तु नाम । कुत्सने- को नामाय सार्विरुदय । अलीकविस्मययोश्च- दृष्टेधरे रोदिति नाम तन्वी, अन्धो नाम पर्वतमारोहति ॥ २५२ ॥ भूषणे- अलंकार । पर्याप्तौ- अलमस्त्यस्य धन, पर्याप्तमित्यर्थः । शक्तौ- अलं मल्लो मल्लाय । वारणे- अलमतिप्रसङ्गेन । अलंखल्वो प्रतिषेधयो ( सू॰ ) इति निषेधेपि- आलप्यालमिद बभ्रोर्यत्स दारानपाहरत् ( शिशु॰ ), न वक्तव्यमेतदित्यर्थ । वितर्के- चैत्रो हुं मैत्रो हुं । परिप्रश्ने- हुं स त्वं सुहृत् । भयादौ च- हुं राक्षसोयम् । भर्त्सने- हुं निर्लज्जः । अनिच्छायां हुं हुं मुञ्च । त्वा समयास्ते, त्वत्समीप इत्यर्थ । ग्रामं समयाऽऽस्ते, ग्राममध्य इत्यर्थः ॥ २५३ ॥ अप्रथमे -पुनरुक्तम् । ( भेदे ) विशेषे- किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ( भगवद्गीता ) । निश्चये- निष्पन्न । निषेधे- निर्मर्यादं । प्रबन्धे- उपाध्यायेन स्म पुराधीयते, अविरतमपाठीत्यर्थः । चिरातीते -पुरापि न नव पुराणम् । निकटागामिके भविष्यदासन्ने- गच्छ पुरा देवो वर्षति, यावत्पुरानिपातयोर्लट् ( सू॰ ), समनन्तर वर्षिष्यतीत्यर्थ ॥ २५४ ॥ उररीकृत्य पट, विस्तीर्येत्यर्थः । आज्ञामुररीकृत्य याति, अङ्गीकृत्येत्यर्थ । स्वर्गे- एहि जाये स्वरारोहाव ( वाजसनेयीसंहिता ) । परलोके- स्वर्गतस्य सत्पुत्रस्य । वार्तायां- जघान कंस किल वासुदेव ( भाष्य॰ ) । संभाव्ये- अर्जुन. किल विजेष्यते कुरून् । हेत्वादौ च- स किल कविरेवमुक्तवान् ( वा॰ रा॰ ) । अलीके- गोत्रस्खलित किलाश्रुतं कृत्वा । अरुचौ- त्वं किल योत्स्यसे ॥ २५५ ॥ निषेधे- खलु कृत्वा, निषिद्ध करणमित्यर्थ. । वाक्यालंकारे- भयो

निषेधवाक्यालङ्कारजिज्ञासानुनये खलु ।
समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः ॥ २५६ ॥
नामप्राकाश्ययोः प्रादुर्मिथोऽन्योन्यं रहस्यपि ।
तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्त्तिषु ॥ २५७ ॥
अहहेत्यद्भुते खेदे हि हेताववधारणे ॥ २५८ ॥

इति नानार्थवर्गः । ३ ।

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।
मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः ॥ १ ॥
स्राग्झगित्यञ्जसाह्नाय सपदि द्राङ् मङ्क्षु[ च ]द्रुते ।
बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ २ ॥

---

त्वाहुः । जिज्ञासायां– स खलु गीते वेदम् । अनुनये– न खलु न खलु मुग्धे साहसं कार्यमेनत् ( नागानन्द० ) । अभितो ग्रामं वसति, सर्वत उभयत्र वेत्यर्थः । शीघ्रे– गच्छाभितः । साकल्ये– व्याघ्राल्यभितो गजः, समन्तदित्यर्थः । आभिमुख्ये– अलङ्कनमभितोऽरिमस्रवत् ॥ २५६ ॥ नाम्नि– विष्णोर्दश प्रादुर्भावाः, मत्स्यकूर्मादीनि दश नामानीत्यर्थः । प्राकाश्ये– प्रादुरासीत् । अन्योन्यार्थे– मिथः प्रहरन्तः । रहसि– मिथो मन्त्रयते । अन्तर्धौ– तिरोहितः । परिभूतेऽन्तर्ध्युपचारात्– तिरस्कृतोऽरिः । तिर्यगर्थे– तिरः काष्ठं कुरु । विषादे– हा रमणीना[ यो ] गतः कालः । शोके– हा प्रिये जनकराजपुत्रि ( उ० रा० ) । अर्त्तौ– हा हतोऽस्मि । निन्दायां च– हा श्रोत्रियान् ॥ २५७ ॥ अद्भुते– अहह महामहर्षो राज्ञः । खेदे– अहह हन्त विरहिणी बाला । दीर्घान्तोऽपि– भिक्षित्वापि बुभुक्षिता अहहहा । हेतौ– अग्निरत्र धूमो हि दृश्यते । अवधारणे– को हि हस्तगतं पादगतं कुर्यात् ॥ २५८ ॥ इत्यव्ययेष्वनेकार्थवर्गः । इति नानार्थवर्गः । ३ ।

चिराय निर्धनो भूत्वा मत्स्यहा( दा )महाधनः । चिररात्राय जायते [ यज्ञते ] । चिरस्य भूतले भासति । आद्यशब्दाच्चिरेण चिराच्चिरेणेति– चिरंजीवी, चिरंतन. । कान्तं[ न्तां ] मुहुर्ध्यायति । पुनः पुनर्वारि पिबेद्भूरि । शश्वद्भक्ति कुशिक्षितः । अभीक्ष्णमारकालयतीमकुम्भम् । असकृद्भक्ति ॥ १ ॥ स्राग्वस्त्वभिसारिका । झगिति कुचतटादेनमो मन्मथाय ( विद्धशाल० ) । अञ्जसाशुग्रा उत्पत्ति मनस्तोषम् । अह्नाय सा नियमजं क्लममुत्ससर्ज ( कु० सं० ) । सपदि मदहरकुरेक्षितेरेभिः । द्राग्विद्रुतं कान्तैः । मङ्क्षु रुरुपति परितः पटलैरलीनाम् ( शिशु० ) । अत्स्यिनु तरसादि च– इति पठन्ति विविधमितर–मभिमुखीभूत. ( रत्नावली० ), आधयोऽहि ममाशीघुमाञ्जनान्, तरक्षोहिता सह जलेषु । तूर्णं द्रुतं क्षिप्रं शीघ्रं त्वरितं क्रियाविशेषणम् । बलवन्निगाढितोऽस्मि । सुष्ठु स्वस्त्विदमुच्यते । किमुत मन्त्रवेशिभिः । सुप्रियत आम. फलति, अतिशिक्षित । अतीव मुरेरापि( वांदि )तः ॥ २ ॥ पृथग्देवदत्तादयं [ स्वतः पृथक् नास्ति यन्तु ] । विना मार्गं हतो देवः [ विना वातं विना वर्षम् ] । अन्तरेण पुरुषकारं न किंचित्सिध्यति । ऋते ज्ञानान्न हि मन्त्रभूतम् ( कु० सं० ) । हिरुक् कर्मणा[ णो ] मोक्षः, कर्मक्षये[ यो ] मोक्ष इत्यर्थ. । नाना नारीर्निष्फला लोकयात्रा । अन्तरान्तरेणापि– स्वामन्तरा वामरूपनास्ति. अ( आ )–रोहिणमावहन्वह । बयमासु मनस्त्वमेव सम्प्राप्नोति । यतो विद्वांस्ततो मन्त्रः । येन तेनादि च– निरः

पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने ।
यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ ३ ॥
कदाचिज्जातु सार्धं तु साकं सत्रा समं सह ।
आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ॥ ४ ॥
आहो उताहो किमुत विकल्पे किं किमूत च ।
तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥ ५ ॥
दिवाह्नीत्यथ दोषा च नक्तं च रजनाविति ॥ ६ ॥
तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ।
स्युः प्याट् पाडङ्ग हे है भोः समया निकषा हिरुक् ॥ ७ ॥
अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ॥ ८ ॥
स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ।
किंचिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ॥ ९ ॥
वद्वा( वा ) यथा तथैवैवं साम्येऽहो ही इति विस्मये ।
मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे ॥ १० ।

---

गिरमुदारा येन मूकाः पिकाः स्युः, नदीं तेन गतः, गमने नदी हेतुः । द्वितयो लक्ष्यते– येन दाता [ वोढा ] तेन श्लाघ्यः । ( ऊने ) किंचिद् ब्रूते । पद्भ्या याति कुनश्चन । प्रायः किंवृत्तात्परौ, क्वचित्– कुत्रचित्– कथंचित् ॥ ३ ॥ अन्योन्यपर्यायावेतौ– कदाचिच्छूरता याति मरणे कृतनिश्चयः, न जातु कामः कामानामुपभोगेन शाम्यति ( मनुः ) । सार्धं धनैर्महान् । पुत्रेण साकं याति । सत्रा कलत्रैर्गार्हस्थ्यम् । भ्रात्रा समं युध्यते । पुत्रैः सहास्ते । सङ्गो द्विजिह्वैः सजूरिति सजूर्गतिप्रतिरूपको निपातः । प्राध्वं कुरुध्वं बुधाः, प्राध्वंबन्धने ( सू० ) इति गतिसंज्ञा– प्राध्वकृत्य । वृथा दुग्धोनड्वान् । मुधे मुधा ताम्यसि ॥ ४ ॥ विकल्पः पक्षान्तरं– स्थाणुराहो पुरुषः, उताहोस्विद् भवेद्राजा नलः परपुरञ्जयः, किमुत रज्जुः किमुत सर्पः [ किं रज्जुः किं सर्पः ], किमु लेख्येत्किमु मानयेत् , एकमेव वरं पुंसामुत राज्यमुताश्रमः । आह्वयामि तु तत्त्वं ते । न हि न हि महिमानं प्राप्य तुष्यन्ति भूपाः । भीमः पार्थस्तथैव च । इति ह स्माहुराचार्याः । यो वै युवाप्यधीयानः । स्वलादयोऽपि– अहो न( नु ) खलु भोः । पूजने– सुस्तुतं, अविस्तुतम् ॥ ५ ॥ दिवातन, इतिशब्देन सप्तम्यन्ते दिनार्थेऽयमिति द्योत्यते । अपेप्येवम् । दोषा– मन्यमहः । नक्तंचरः । तथा– उषापि– उषातनो वायुः ॥ ६ ॥ साचि लोचनयुगं नमयन्ती । तिरः काष्ठं कुरु । प्याट् पाटकाः । पाट् पान्थाः । अङ्गानङ्ग, इत्याह्वाने चैतत् । हे चैत्र । है वातूल । भो भार्गव । हंहो, अरेरे, अयि– हहो काम, रे चोर, अरे चेट, अयि प्रिये । एते समं पार्थेऽन्येऽन्ये पर्यायाः– समया ग्रामं, लङ्कां निकषा हनिष्यति ( शिशु० ) । सभ्यान् हिरुक् ॥ ७ ॥ सहसा विदधीत न क्रियाम् ( किरातार्जु० ) । अप्रार्थ्यौ एते– पुरःसरः । नासीरधूलिधवलाः पुरतः प्रयान्ति । अग्रतो धावति श्वः ॥ ८ ॥ सोमाय स्वाहा । अस्तु श्रौषट् । मीढी वौषट् । वषाडिन्द्राय । पितृभ्यः स्वधा । किंचित्कुञ्चितमूर्धजाः । ईषत्स्मेरः । मृत मनागसमार्दवम् । अन्यो धनं प्रेत्य गतस्य भुङ्क्ते । अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम् ॥ ९ ॥ पचतीति[ स्रवन्ती ]त्त् । पटिवेर्गी[ नी ] वान्यहरा[ पा ] ( मेघ० ) । यथा चैत्रस्तथा मैत्रः । शारदाभ्रमिव पेलवमायुः । यथार्कं एवं कर्णः । अहो आश्चर्यम् । हतविधिलसि( सि )तानां ही विचित्रो विपाकः ( शिशु० ) । मुनिस्तूष्णीमास्ते । अकच्प्रकरणे तूष्णीमः काम्यकन्यः ( वा० ) इत्यज्ञातार्थे विशिष्टे मौने तूष्णीकां, मौनमात्रे तूष्णीम् । सद्यः पाति मांसेन । सपदि प्रद्वहत्युपेक्षितोऽग्निः ॥ १० ॥

दिष्ट्या समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा ।
अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ॥ ११ ॥
युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते ।
अभावे नह्य नो नापि मास्म मालं च वारणे ॥ १२ ॥
पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाञ्जसा द्वयम् ।
प्रकाशे प्रादुराविः स्यादोमेवं परमं मते ॥ १३ ॥
समन्ततस्तु परितः सर्वतो विष्वगित्यपि ।
अकामानुमतौ काममसूयोपगमेऽस्तु च ॥ १४ ॥
ननु च स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने ।
निष्षमं दुष्षमं गर्ह्ये यथास्वं तु यथायथम् ॥ १५ ॥
मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ।
स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १६ ॥
प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् ।
संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ॥ १७ ॥

---

दिष्ट्या पुत्रो जातः । समुपजोषं वर्तते । आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ( महानाट० ) । अन्तरा त्वां च मां च कमण्डलुः । यतो भवन्तमन्तरेणान्यया भूरनिर्वाहित., भवन्मध्येनेत्यर्थः । प्रसह्य वित्तानि हरन्ति चौराः ॥ ११ ॥ न सांप्रतं यत स्त्री नेती । स्थाने स्थाने प्रश्नः । अभीक्ष्णं वक्ति । शश्वद्याति, अविरतमित्यर्थः । नहि प्रेम प्रयोजनापेक्षम् । अनिप्र इव भाषसे, विश्वस्य मूढ इत्यर्थः । नो जानीमः । नेकः सुप्तेषु जागृयात् । मास्म करो । मा कार्षीः । अलं बाले रोदनेन ॥ १२ ॥ अन्यथेदम्मतेन किम् । यदि खलास्तत्किमलकं मृषा । अरे अद्धा पुरुषः । अञ्जसा वक्ति साधु । प्रादुरासीत् । आविर्भूतः । मतमभ्युपगमः– ओं कुरु, एवं कुरु, परमं तथास्तु । एवं माहमित्यादि च ॥ १३ ॥ एते सर्वतोदिगर्थे– समन्ततो धावति, परितः प्रपतन्ति दुष्कृता( तो ) विपद , सर्वतः संपदः सताम् , विष्वग्भवति विश्वग्र्हम् । इतिशब्दात्समन्तादित्यादि– समन्ताद्भवः सामन्तः । आदावनिच्छायां पश्चादङ्गीकारे– कामं करोमि । अस्तुशब्दोऽसूयापूर्वेऽङ्गीकारे– अस्तुकारः, एवमस्तु को दोषः । चशब्दाद्भवतु नाम ॥ १४ ॥ ननु च शब्दः । कामप्रवेदनमिष्टपरिप्रश्नः– कच्चिज्जीवति मे माता । निष्क्रान्ताः समा दुष्टाः समा वत्सरा अत्रेति, तिष्ठद्गुप्रभृतीनि च ( सू० ) इत्यव्ययीभावाददन्तत्वम् , गर्भमात्रे तस्याचारात् , षत्वेन समासो वा– निष्षमं वक्ति मूर्खः , कालानुचितमित्यर्थः । एवं दुःषमं वर्तते । सर्वेषु यथायथम् , यथास्वं[ त्वं ]रमित्यर्थ , यथास्वेयथायथमिति ( सू० ) साधुः ॥ १५ ॥ मृषोद्यम् ( उ० रा० ) । मिथ्यावादी । तथेति सत्यमनतिक्रम्य– यथातथं वक्ति सभासु विद्वान् । एकमेव तु । आत्मा सर्वं तु पश्यति । विनः पुनः पूज्यः । गुरुर्वा वक्ति मौम्यो वा । त्वमेव देव सर्वं जानासि ॥ १६ ॥ प्राक् स्नानम् । नूनं दन्तोऽसि राजन् । अवश्यं भातरश्विरतगुदिनानि विरक्तः ( भर्तृ० ) । संवत्सरः, संवत्सृतीये । अवरः पराद्न्यः– वर्षं दोऽन्तादर्वाक् , अर्वाक् कुल्येन । आमन्त्रणार्थे– आं कुर्वं , एवं कुर्वं । स्वयम्भूः, आत्मनेति तृतीयान्तार्थे ॥ १७ ॥ नार्थेऽहह इति । उच्चैरुच्चैरुत्तुङ्गम् । उच्चैः प्रायो निरोधार , मुहुर्बाहुल्यार्थे । अर्थे प्रार्थे– शनैर्याति निःस्तिका । कल्येति ( धने. ) अनुतापान्वयात्–

अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः ।
सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ॥ १८ ॥
अस्ति सत्त्वे रुषोक्तावु( वु ) ऊं प्रश्नेऽनुनये त्वयि ।
तर्के स्यात् ( हुं तर्के ) स्याद्रुपा रात्रेरवसाने नमो नतौ ॥ १९ ॥
पुनरर्थेऽङ्ग निन्दायां दुष्टु सुष्टु प्रशंसने ।
सायं साये प्रगे प्रातः प्रभाते निकषान्तिके ॥ २० ॥
परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ।
अद्यात्राह्नयथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २१ ॥
तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ।
उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २२ ॥
ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽहनि ।
तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २३ ॥
एतर्हि संप्रतीदानीमधुना साम्प्रतं तथा ।
दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २४ ॥

इत्यव्ययवर्गः । ४ ।

---

शनैः शनैर्व्युपरमेत् । सनातनः । सनत्सनाच्च- सनत्कुमारः, सनात्कुमारश्च । बहिर्भूतः । वक्ति स्म व्यासः, अवोचदित्यर्थः । अस्तं गतः ॥ १८ ॥ अस्तिक्षीरा स्त्री, अस्ति परलोके मतिरस्यास्तिकः । कोपनोक्तौ- उं सैवास्मि तव प्रिया । रुषेत्येव- ऊ न जानासि स्वार्थम् । अप्ययि साहसकारिणि । स्याद्वादिनो जैनाः । उषातनो वायुः । नमो देवेभ्यः ॥ १९ ॥ अमानुगुण्ये स्मरणे हुं फट् विघ्ननिराकृतौ । अङ्गीकृतौ स्यादर्थे हूं हीनसंबोधने त्वरे ॥ मूर्खोऽपि नावमन्तव्यः किमङ्ग विद्वान् । दुष्टुवादी खलः । सुष्टूक्तम् । सीयते क्षीयते सायो निशामुखं, घञ्- सायंतनो वायुः, कायम स्नानः सन्ध्यां वन्देत । प्रगेतनो वायुः । प्रातः संध्यामुपासीत । मित्र निकषास्ते ॥ २० ॥ पूर्वे वर्षे परुत् । पूर्वतरे वर्षे परारि । यति गच्छति वर्तमाने वर्षे- ऐषमः, सद्य.परुत्परार्यैषमइति ( सू० ) साधवः । एवमग्रिमाः । अस्मिन्नहन्यद्य, वर्तमानतामात्रेऽप्याहुः- नरो लोकेऽद्य दुर्लभ ( कंसः ), तदद्यत्वेन तथा । पूर्वेऽह्नि पूर्वेद्युः । आदिशब्दादुत्तरेद्युः, अधरेद्युः, अपरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः । द्युर्दिनमिति श्रीभोजः, यथा- द्युश्चन्द्रो द्योतते कथम् ॥ २१ ॥ उभयोरह्नोः- उभयेद्युः, उभयद्युः, द्युश्चोभयाद्वक्तव्यः ( वा० ) । स्मार्ते पाक्षिणार्थे रात्रिरुदिता । स हन्तास्मि परेद्यवि ॥ २२ ॥ अतीतेऽह्नि ह्यः- ह्योऽकरोत् । अनागतेऽह्नि श्वः- श्वो गन्ता । श्वोदिनात्परमहः परःश्वः, पारस्करादित्वात् ( सू० ) परःसहस्रादिवत्सुट् । तस्मिन्काले तदा, तदोदाचेति ( सू० ) तदा, तदानीं च । एतौ तुल्यकालार्थौ । युगपत्प्रमाताः । एकस्मिन्काले- एकदा मिलन्ति । एकपदे च- अयमेकपदे तया वियोगः ( विक्रमोर्वशी० ) । सर्वस्मिन्कालेऽर्थे, सर्वैकान्यकियत्तदःकाले दा ( सू० ), सर्वस्यसोऽन्यतरस्यादि ( सू० ) ॥ २३ ॥ अस्मिन्कालेऽर्थे, इदमोर्हिल् ( सू० ), एतेतौरथोः ( सू० ) इत्येतादेशः, ( एतर्हि )- भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेववर्त्मनि ( रघु० ), अधुना, इदानीं च । संप्रत्येव साम्प्रतं, स्वार्थेऽण् । प्राच्यां दिशि प्राचि देशे काले वा- प्राग्वसति । प्राच्या दिशः प्राचो देशात्कालाद्वा- प्रागागतः । प्राची दिक् प्राङ् देशः कालो वा- प्र रम्यम् । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ( सू० ), अञ्चेर्लुक् ( सू० ) । आदिशब्दादुदगवाग.दि । एवं पूर्वादिभ्यः पुरस्तादधस्तादादि ॥ २४ ॥ इत्यव्ययवर्गः । ४ ।

तत्वृन्दे येनिकस्त्वत्रा वैरमैथुनिकाविवुन् ।
स्त्रीभावादावनिक्तिण्ण्वुल्ण्चण्वुच्क्यप्युजिञ्श्ड( इनि )शाः ॥४॥
उणादिषु निरूरीश्च ङ्याबूडन्तं चलं स्थिरम् ।
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णादिक् ॥ ५ ॥
घञो ञः सा क्रियास्यां चेद् दाण्डपाता हि फाल्गुनी ।
श्यैनपाता च मृगया तैलपाता स्वधेति दिक् ॥ ६ ॥
स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ।
लङ्का शफालिका टीका धातकी पञ्जिकाढकी ॥ ७ ॥
सिध्रका शा( सा )रिका हिक्का प्राचिकोल्का पिपीलिका ।
तिन्दुकी कणिका भङ्गि सुरङ्गासूचिमाढयः ॥ ८ ॥

---

द्विशतिकां ददाति । उपलक्षणत्वाद् वुञन्तोपि, द्वन्द्वमनोज्ञादिभ्यश्च ( सू० ) इति वुञ्- शैष्योपाध्यायिका । गोत्रचरणाच्छ्लाघादौवुञ् ( सू० )- गार्ग्यस्य भावः कर्म चेति गार्गिकया श्लाघते, काठिकया श्लाघते । स्त्रियामित्यधिकृत्य भावे वा कर्तरि च कारके- अन्नादिप्रत्ययान्ताः स्त्रियाम्, आक्रोशेनञ्यनिः ( सू० )- अजननिस्ते वृषल भूयात्, अकरणिः । स्त्रियाक्तिन् ( सू० )- कृतिः, भक्तिः । रोगाख्यायां ण्वुल्बहुलम् ( सू० )- प्रवाहिका, विपादिका । धात्वर्थनिर्देशेण्वुल्वक्तव्यः ( वा० )- कारिका, आविका । कर्मव्यतिहारणच्स्त्रियाम् ( सू० )- अन्यान्य व्यावक्रोशन व्यावक्रोशी वर्तते, व्यावभाषी[ हासी ], णच स्त्रियामञ् ( सू० ) स्वार्थे । पर्यायार्हर्णो पतिपुण्वुच् ( सू० )- भवतः शायिका, इक्षुभक्षिकोत्पन्ना । व्रजयजोर्भावेक्यप् ( सू० )- व्रज्या, इज्या । संज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ( सू० ) क्यप्- समज्या, निषद्या । हनस्तच ( सू० ) इति क्यप्- ब्रह्महत्या । ण्यासश्रन्थोयुच् ( सू० )- मण्डना, आसना । प्रश्नाख्यानयोरिञ्च ( चान्द्रसू० )- कां कारिमकार्षीः, इमां कारिमकार्षम् । षिद्भिदादिभ्योऽङ् ( सू० )- घटा, मृजा, भिदा । अप्रत्ययात् ( सू० )- चिकीर्षा, पुत्रीया । कृञः शच ( सू० )- क्रिया, इच्छा ॥ ४ ॥ उणादौ न्यन्त ऊदन्त ईदन्तश्च स्त्रियां- अरणिः, धमनिः, ह्रानिः, ज्यानिः, ग्लानिः, अलाबूः, जम्बूः, लक्ष्मीः, तन्त्रीः । ङ्याप्तमाबन्तमूङन्तं चाभिधेयलिङ्गं स्वलिङ्गं च स्त्रिया- पुंस इव गौरी बुद्धिः, हिमानी, अजा, बलाका, श्वश्रूः, ब्रह्मबन्धूः । मुष्टिः प्रहरणं यस्यां क्रिडायां मौष्टा, पल्लवः प्रहरणमस्यां पाल्लवा, तदस्यां प्रहरणमितिक्रीडायांण, ( सू० ), णादिक्- णप्रत्ययोदाहरणमित्यर्थः ॥५॥ दण्डपातोस्यां फाल्गुन्यां वर्तते श्येनपातोस्यां मृगयायां वर्तते, तिलपातोस्यां स्वधायां वर्तते, घञः सास्यांक्रियेति ( सू० ) ञः, श्येनतिलस्य पातेञे ( सू० ) इति मुक्, स्वधः स्त्यस्यां स्वधा श्राद्धम् ॥ ६ ॥ अपचयेऽल्पत्वे यदि वक्तुमिच्छा तदा मृणाल्यादयः स्त्रीलिङ्गाः स्युः । अपचयेपचयस्यानल्पत्वमानि हि क्लीपुंनपुंसकानि । आदिशब्दाद्गगाली, सटी, मठी, छत्रिका, गृह्यकाण्डो । काचिदिति यत्र लोके पुंनपुंसकयोः स्त्रीत्वं दृश्यते, न सुखादौ । लङ्का राक्षसपुरी । शफालिका पुष्पविशेषः । टीका वृत्तिः । धातकी नामौषधिः । पञ्जिका न्यासः । आढकी व्रीहिभेदः, खल्वाढक च ॥ ७ ॥ सिध्रकाशारिके वृक्षभेदौ । हिक्का- ऊर्ध्वं वातप्रवृत्तौ शब्दः । प्राचिका पक्षिविशेषः । उल्का ज्वाला । पिपीलिका वल्मीकस्वामिः । योऽयमविद्धः प्रागनुक्तो वा स प्रातिपदिकेनोच्यते, अतः शनैर्यान पिपीलिक इति पुंनामनिष्पन्नम् । एवं सर्वत्र । तिन्दुकी नाम वृक्षः फलं च । कणिका- अल्पकणः- गोधूमपिष्टं च । भङ्गिर्विच्छित्तिः । सुरङ्गा तिर्यग्भूरन्ध्रम् । सूचिः सीवनी । माढिर्नाम देशः वचनं च ॥८॥ पिच्छा-आचामः । पिच्छिला स्वाधस्थानान्त(नो) हीनो जलः ।

पिच्छाचितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरद् ।
सातिः कन्या तथासन्दी नाभी राजसभापि च ॥ ९ ॥
झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।
लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥ १० ॥
पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।
स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥ ११ ॥
करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।
अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ॥ १२ ॥

---

काकिणी नाम माषकचतुर्थभागः, पणचतुर्थभाग इत्येके । काकिनीति सभ्या । चूर्णिर्मेध्यम् । शाणी निकषः, शाण इत्येके, कषणीशाठे संकोचोर्थः । द्रुणी कौञ्चकैका । दरद् म्लेच्छजातिः । सातिः प्रावार-विशेषः । कन्या खण्डः स्यूत वासः । आसन्दी पीठिका । नाभी तुन्दिः । राज्ञः सभा राजसभा, सभाराजामनुष्यपूर्वेति ( सू॰ ) राजनिवेधार्त्रेन्त्वम् ॥ ९ ॥ झल्लरी वाद्यविशेषः । चर्चरी हर्षक्रीडा । पारी पानभाण्डम् । होरा लग्नं जातकं च । लट्वा—अलका भ्रमरकश्च । सिध्मला पाला मत्सः क्लिन्न च । लाक्षा जतुः । लिक्षा यूकागर्भः । गण्डूषा— अम्बुचुलुकं, गण्डूषोपि । गृध्रसी— ऊरुसन्धौ वातरुक् । चमसी मसूरादिपिष्टं रत्नचषकश्च । मसी रञ्जनी । इति स्त्रीलिङ्गशेषः ॥ १० ॥ सुरा असुराश्च तद्विशेषा-स्तदनुचराश्च पर्यायैः सह पुंसि । सुरा दिवौकसः, सुरविशेषाः—इन्द्रो बिडौजाः शक्र, आदित्य- सूर्यो रविः, ब्रह्मा स्वयंभू , विष्णु शौरिः, रुद्र- शम्भुः । विष्णोरनुचराः—चण्ड- प्रचण्ड-, जयो विजय-, विष्वक्सेन । रुद्रानुचराः – नन्दी महाकालो भृङ्गी, गणाः प्रमथाः । एवं सर्वत्र । असुराः पूर्वदेवा दैत्या दानवाः, तद्विशेषा – विरोचनो बलिर्नमुचिः प्रह्लादः । शाह् नपुंसकाधिकारात्पुंलिङ्गाधिकारः । एते सभेदाः सपर्यायाः पुंसि । स्वर्गो नाकस्त्रिदिव । यागः क्रतुः सप्ततन्तुः, तद्विशेषा – अग्निष्टोम उक्थ्य-विश्वजित्— अश्वमेधः । अद्रिः पर्वतः शैल , तद्विशेषा – मेरुर्हिमवानुदयः हिमवान् मन्दरो विन्ध्यः पारियात्रः । मेघस्तोयधरो घन-, तद्विशेष. पुष्करावर्तक । अब्धिः समुद्र उदन्वान्, तद्विशेष. क्षीरोदः । द्रुमस्तरुः पादप-, तद्विशेष- अश्वत्थ आम्रः पनस । काल समय , तद्विशेषा – क्षणो लव , मुहूर्तः, पक्षः, संवत्सरः । असिः करवालः, तद्विशेषा – नन्दकचन्द्रहास. । शरः सायक. पृषत्कः सुरवः । अरिर्द्विष-न्मित्र ॥ ११ ॥ करः पाणिर्हस्तः । गण्डः कपोल. । ओष्ठो दन्तच्छदोऽधर । दोर्बाहुः । दन्तो रदनः । कण्ठो गल । केशो वालश्चिकुरः । नख करजः । स्तनः पयोधरः । अहन्नन्तास्तथा अह्नोत्तरपदाः पुंसि, रात्राह्नाहाः पुंसि ( सू॰ ) इति– पूर्वाह्न, मध्याह्न , सायाह्नः । द्व्यहः, त्र्यह-, उत्तमाह-, परमाहः, राजाह-सखिभ्यष्टच् ( सू॰ ), अह्नोऽह्न एतेभ्य. ( सू॰ ) इत्यह्नादेश । विषविशेषा- पुंसि– हालाहलो गरलः कालकूटो हलाहल- । पुंसि क्लीबे च प्रयुक्तत्वात्पुंसि नपुंसकेऽपि विधिः । एवं सर्वत्र । विषं तु क्लीबे । सर्वैकदेशसंख्यापूर्वाः रात्रान्ताः पुंसि– अर्धरात्र , द्विरात्र-, वर्षारात्र-, अहःसर्वैकदेशसंख्यात-पुण्याच्च रात्रेः ( सू॰ ) इत्यच् , नेह– त्रिरात्रं, पञ्चरात्रम् ॥ १२ ॥ अविद्यमाना संख्या यस्य स्वार्थसंख्येयवृत्तिः । निर्देशो दशम्यन्त । अकारान्ता अकारान्ताभावविधिना अनादि[ दि ]स पुंसि– द्विपदाः, उद्यमा, प्रमा, क्षमा । अनाकारान्ता इति– इदं पयो जगत्, इदं रूप्यं, इदं धाम । यस्तूक्तः संख्यावाचिनामपवादो वक्ष्यते । संख्येये नियतलिङ्गा नाम्ना संख्याशब्दा पुंसि– अष्ट पञ्चदशपरम्, मस्तु, मद्रु , मधु, हिमवर्षा-न्यसदृश , न्यद सद्गुणदिदृक्षु , मदनेन, ऊरु धृत । नेह– इदं नयोह्य अद्यतः बन्द , जनु लाक्षा,

श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अवाधिताः ।
कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥ १३ ॥
कषणभमरोपान्ता यद्यदन्ता अमी अथ ।
पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥ १४ ॥
नाम्न्यकर्तरि भावे च घञजब्नङ्णघाथुचः ।
ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः ॥ १५ ॥
द्वन्द्वेऽश्ववडवावश्ववडवानसमाहृते ।
कान्तः सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च ॥ १६ ॥
वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ।
पुङ्खो न्युङ्खः समुद्गश्च विटपट्टघटाः खटः ॥ १७ ॥
कोट्टारघट्टहट्टाश्च पिण्डगोड( गोण्ड )पिचण्डवत् ।
गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥

---

वस्तु पदार्थः ॥१३॥ ककारादिद्वादशाक्षरोपधा अकारान्ताः पुंसि । क– शल्कः, वृकः, श्वेतकः, वराटकः । ष– वृषः, कक्षः, निकषः । ण– गणः, शणः, बाणः, कणः । भ– कुम्भः, शलभः । म– आचामः, धूमः, ग्रामः । र– अङ्कुरः, करः, दरः, समीरः । प– सर्पः, सूपः, कलापः, बाष्पः । थ– सार्थः, पथः, नाथः । न– फेनः, हायनः, स्तनः, जनः । य– तनयः, व्ययः, तन्तुवायः । स– रसः, दासः, कुसः, वत्स. । ट– सरटः, पटः, कटः । अपत्यप्रत्ययान्ताः शाखाध्यायिनश्च पुंसि– गार्ग्यः, वासिष्ठः, दाक्षिः, कठः, बह्वृचः, छन्दोगः ॥ १४ ॥ अकर्तरि च कारके संज्ञायां भावे चार्थे घञन्तादयः पुंसि । घञ्– प्र( प्रा )सीदन्त्यस्मिन्नयनमनांसीति प्र( प्रा )सादः, प्रक्रियते प्रकारः, पाकः, त्यागः, अकर्तरि च कारके संज्ञायां ( सू० ) घञ् । अच्– पचः चयः, नयः, पचाद्यच् ( नन्दिग्रहीति ), एरच् ( सू० ) । अप्– करः, गरः, स्तवः, लवः, प्लवः, ऋदोरप् ( सू० ) । नङ्– यज्ञः, यत्नः, प्रश्नः, यजयाचयतविच्छेति ( सू० ) नङ् । उपलक्षणत्वात्– स्वपो नन् ( सू० ) । णः– न्यदनं न्यादः, नौ ण चेति ( सू० ) णः । घः– प्रहरः, निगमः, गोचरः, पुंसि संज्ञायां घः प्रायेण ( सू० ) । अथुच्– आनन्दथुः, श्वयथुः, वेपथुः, ट्वितोऽथुच् ( सू० ) । कर्तरि ल्युः पुंसि– नन्दयति नन्दनः, रमयति रमणः, नन्दिग्रहिपचेति ( सू० ) ल्युः । इमनिजन्ताः पुंसि– पृथोर्भावः प्रथिमा, लघिमा, पृथ्वादिभ्य इमनिज्वा ( सू० ) । भाव इति किं– तीमा पृथ्वी, च[ व ]रिमा तपस्वी, औणादिक इमनिच् । भावे कप्रत्ययान्तः पुंसि– आखूनामुत्थानमाखूत्थो वर्तते, सुपि स्थः ( सू० ) इति योगविभागात्कः । घञर्थे कविधानं ( वा० )– प्रस्थः, प्रघ्नः । प्रादित उपसर्गादन्यतः सुबन्ताच्च परात् घुसंज्ञकात्परो यः किप्रत्ययस्तदन्तः पुंसि– निधिः, प्रधिः, आधिः, आदिः, उपसर्गे घोः किः ( सू० ), जलधिः, इषुधिः, कर्मण्यधिकरणे च ( सू० ) इति किः ॥ १५ ॥ समाहारादन्यत्र द्वन्द्वेऽश्ववडवौ– अश्ववडवाः पुंसि, द्विवचनबहुवचनयोरुदाहरणम् । नेह– अश्ववडवम्, विभाषा वृक्षमृगेति ( सू० ) समाहारविकल्पः । सूर्यादिपूर्वः कान्तशब्दः पुंसि– सूर्यकान्तः, भास्करकान्तः, इन्दुकान्तः, चन्द्रकान्तः, अयस्कान्तः ॥ १६ ॥ वटको भक्ष्यविशेषः । अनुवाक ऋग्यजुःसमूहः । रल्लकः पक्ष्मकम्बलः । कुडङ्गको वृक्षलतागहनम् । पुङ्खः काण्डमूलम् । न्युङ्खा ओंकाराः षोडश । समुद्गः सम्पुटकः । विटः कामुकानुचरः । पटः उष्णीषादिः । घटो दारुणा । खटस्तृणम् ॥ १७ ॥ कोट्टो दुर्गः । अरघट्टो महाकूप. । हट्ट आपणः । पिण्डो ग्रास. । गोडो गुल्फो देशविशेषो वा । पिचण्ड उदरम् ।

कोट्याः शतादिः संख्यान्या वा लक्षा नियुतं च तत् ।
द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥
त्रान्तं सनो( लो )पधं शिष्टं रात्रं प्राक्संख्यायान्वितम् ।
पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥
द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ।
षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥ २६ ॥
शालार्थापि परा राजामनुष्यार्थादराजकात् ।
दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥ २७ ॥
उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।
कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ॥ २८ ॥

---

मदनः । कथमास्थानमास्थानी, करण करणी, प्रमाणं प्रमाणी, अधिकरणमधिकरणी, राजधानं राजधानी' ल्युटष्टित्वात्, किं च, कृत्यल्युटोबहुलम् ( सू० ) इत्यनान्तानां त्रिलिङ्गत्वं सम[ स्व ]रन्ति– राजभोजनी क्षैरेयी, राजभोजनः शालिः, राजभोजन भक्तम्, इध्मव्रश्चनी शर्ङ्गी, इध्मव्रश्चन· परशु', इध्मव्रश्चन शस्त्रम्, पलाशशातनी, पलाशशातनः, पलाशशातनम्, पूरणी, पूरणः, पूरणम्, गोदोहनी घटी, गोदोहनो घटः, गोदोहन भाण्डम् ॥ २४ ॥ केवलं त्रान्तं, सकारनकारोपध त्रशब्दान्तं च, शिष्ट प्रागुक्तादन्यच्छब्दरूपं तृतीये– पात्र, असत्रं, दात्रं, कलत्र, शस्त्र, वस्त्र, शास्त्रं, अन्त्रं, तन्त्र, मन्त्रम् । शिष्टमिति किं– पुत्रः, औपवस्त्रः, मन्त्रः । संख्यापूर्वं रात्रान्तं तृतीये, रात्राह्नाहा पुंसीति ( सू० ) पुंस्त्वं प्राप्तम्– तिसृणां रात्रीणां समाहारस्त्रिरात्रम्, एवं पञ्चरात्रं, षड्रात्रम् । संख्ययेति किं– वर्षारात्रः । पात्रादिभिरकारान्तै- रुत्तरपदैः समाहारे लक्ष्यानुसारेण यो द्विगुः स तृतीये– पञ्चपात्रं, त्रिभुवन, त्रिपुरदाहमुमापतिसेविनः ( किरातार्जु० ), चतुर्युगम् । पात्रादीति किं– त्रिलोकी, त्रिवेदी । एकार्थ इति किं– पञ्चकपालः पुरो- डाशः । लक्ष्यानुसारत इति किं– त्रिपुरी, पञ्चमूलाश्रृतं पय· ॥ २५ ॥ द्वन्द्वस्य यदेकत्वं समाहारोऽव्ययी- भावश्च समासस्तृतीये– इद पाणिपाद, मार्दङ्गिकपाणविकं, स्त्रीषु कथा वर्तत इदमधिस्त्रि, इद तिष्ठद्गु कालः, इदमुन्मत्तगङ्गं देशः । संख्याव्ययाभ्यां परः कृतसमासान्तः पथिशब्दस्तृतीये– त्रयाणां पथां समाहारस्त्रिपथ, विरुद्धः पन्था विपथं, कुत्सितः पन्था कापथम् । संख्याव्ययादिति किं– धर्मपथ· । षष्ठ्यन्तात्परा कृतसमासान्ता छाया तृतीये बहूना चेत्– गृध्राणा छाया गृध्रच्छाय, वीना छाया विच्छाय, शलभच्छायं, छायाबाहुल्ये ( सू० ) इति नपुंसकम् । बहूनामिति किं– वृक्षस्य च्छाया वृक्षच्छाया । षष्ठ्याः परा समासे समूहार्था सभा तृतीये– दासीनां सभा दासीसभं दासीसमूह इत्यर्थ·, ब्राह्मणसभं, अशालाच ( सू० ) इति नपुंसकम् । संहताविति किं– दास्याः सभा गृह दासीसभा ॥ २६ ॥ राजार्थे- भ्योऽमनुष्यार्थेभ्यश्च षष्ठ्यन्तेभ्यः परा समूहार्था शालार्थापि सभा तृतीये, राजशब्दपरा चेन्न स्यात्– नृपस्य सभा गृह नृपाणा समूहो वा नृपसभं, ईश्वरसभ, रक्ष सभं, पिशाचसभम् । अराजकादिति किं– राजसभा, सभाराजामनुष्यपूर्वा ( सू० ) इति नपुंसकम् । इमा दिश इमान्युदाहरणानीत्यर्थः ॥ २७ ॥ उपज्ञायत इत्युपज्ञा, उपक्रम्यत इत्युपक्रमः, तदन्त शब्दः षष्ठीसमासे तदादिकथने द्योत्ये तृतीये– यथा कस्योपज्ञा कोपज्ञं सर्गः, चन्द्रोपज्ञमसंज्ञक व्याकरणं, पाणिन्युपज्ञमकाल( लक ) व्याकरण, कस्योप- क्रमः कोपक्रमं सृष्टिः, नन्दोपक्रमाणि मानानि । तदादित्व इति किं– डित्थोपज्ञो रथः, चैत्रोपक्रमो घटः, उपज्ञोपक्रमंतदाद्याचिख्यासायाम् ( सू० ) इति नपुंसकम् । उशीनरदेशे या कन्था षष्ठ्याः परा सा संज्ञायां गम्यमानायां तृतीये– सौशमीना कन्था सौशमिकन्थम् । उशीनरेति किं– दाक्षिकन्था । नाम-

मावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणोः ।
अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः ॥ २९ ॥
क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ।
चोचमुक्तं गृहस्थूणं तिरीटं मर्मयोजने ॥ ३० ॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।
माणिक्यभाण्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलस्थालबाह्लव( ह्लिक )म् ।
पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥
मोदकस्तण्डकष्टङ्कः शाटकः खर्वटोऽर्बुदः ।
पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥

---

स्विति किं– चैनकन्या, संज्ञायांकन्योशीनरेषु ( सू० ) इति नपुंसकम् ॥ २८ ॥ नणकेभ्यश्चकारानुबन्धेभ्यश्च येऽन्ये भावेऽर्थे कृतस्तथा समूहेऽर्थे भावकर्मणोश्च ये तद्धितास्ते ते मत्तया येषा ते शब्दास्तृतीये– समन्ताद्भावः सारादिणं वर्तते, सांकूटिनं वर्तते, अभिविधौभावइनुण् ( सू० ), अणिनुणः ( सू० ) इति स्वार्थेऽञ् । ब्रह्मणो भवनं ब्रह्मभूयं गतः, भुवोभावे ( सू० ) इति क्यप् । नणकचिद्भ्योऽन्य इति किं– ( न )– भदनः, यत्नः, ( ण )– न्यदन न्यादः, नौणचेति ( सू० ), ( क )– आखूनामुत्थानमाखूत्थः, सुपिस्थः ( सू० ) इति योगविभागात्क, ( चित् )– श्वयन श्वयथुः, ट्वितोऽथुच् ( सू० ), आसनमासना, भावना, ण्यासश्रन्थोयुच् ( सू० ) । समूहादौ तद्धिताः खल्वपि– भिक्षाणां समूहो भैक्ष, यौवतं, राजकं, धौक्षकं, गोर्भावो गोत्वं, शुक्लस्य भावः कर्म वा शौक्ल्यं, मार्दवं, मानोज्ञकं, स्तेयम् । पुण्यसुदिनाभ्यां परः कृतसमासान्तोऽह शब्दस्तृतीये– पुण्यं च तदहश्च पुण्याहं, सुदिनशब्दोऽत्र शोभनवाची, यथा– सुदिनासु समसु कार्यमेतत्, पुण्यसुदिनाभ्यामह्नोक्तव्यात् ( वा० ) नपुंसकत्वम् ॥ २९ ॥ क्रियाविशेषणान्यव्ययविशेषणानि च तृतीये– एकवचनान्तानि च भवन्ति– मृदु पचति, शोभनं पचति, पूर्वस्या दिशि देशे काले वा पुरस्ताद्रम्यं, श्वः शोभनम् । एते शब्दास्तृतीये– उक्थं सामविशेषः, तोटक वृत्तभेदो दशरूपकभेदश्च, चोचं भुक्तोच्छिष्टा फेला, नारिकेरफलस्य फल्त्वात्स्थिद्ध, उक्तमेकाक्षरं छन्द, अत्युक्त च द्व्यक्षरम् । गृहस्य स्थूणा गृहस्थूणम् । तिरीटं शिरोवेष्टनम् । मर्म संधिस्थानम् । योजनं चतुष्कोशी ॥ ३० ॥ राजसूयवाजपेये यज्ञविशेषौ । कविकर्मण्येते द्वे तृतीये– गद्य दण्डकबन्धः, पद्य श्लोकबन्धः । कृतौ कवेरिति किं– पद्या स्त्री, पद्या शर्करा । मणिरेव माणिक्यम् । भाण्यं चूर्णं । सिन्दूरं चीनपिष्टम् । चीरं वार्क्षी त्वक् । चीवर मुनेर्वास । पञ्जरं पक्ष्यादिबन्धनगृहम् ॥ ३१ ॥ लोकायत नाम तर्कः । हरितालं धातुभेद । विदल दाडिमकणः, फल[ ले ]स्य द्विदलम् । स्थालं भोजनपात्रम् । बाह्लवं देश. । इति नपुंसकलिङ्गशेष । अयमिदं वार्धमृचोऽर्धर्चः । पिण्याकं खलिः । कण्टक स्ताराम ॥ ३२ ॥ मोदक भक्ष्यविशेषः । तण्डक परिष्कारः, दण्डको वायम् । टङ्कोऽश्मदारण । शाटकं पटः । खर्वटश्चतुःशतग्रामाणां मध्यस्थानम् । अर्बुदोऽक्षिरोगः सङ्ख्याविशेषश्च, पर्वते तु पुंलिङ्ग । पातको गोहत्यादिः । उद्योग उत्साह । चरक शास्त्रविशेषः । तमालं वृक्षभेद । आमलको धात्रीफल, वृक्षे त्वामलकी । नडोऽन्तःशुषिर तृणम् ॥ ३३ ॥ कुष्ठ त्वग्रोगः, द्रव्यं च । मुण्ड शिर, मुण्डिते तु वाच्यलिङ्गम् । शीधुर्मद्यम् । शुल्तं माषशष्कुली । क्ष्वेडित मुखध्वनिभेदः । क्षेमं कुशलम् । कुट्टिम निवृत्तः कुट्टिमो मणिभू । सगमो

कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ।
संगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥
कविय कन्दकर्पासं पारावारं युगंधरम् ।
पूयं ( यूपं ) प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ ॥ ३५ ॥
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥ ३६ ॥
स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ।
जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ॥ ३७ ॥
मुनिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ।
मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कुटी कटी ॥ ३८ ॥
स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ।
औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः ॥ ३९ ॥
षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः ।
स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ॥ ४० ॥

---

नद्यादिमेलः । शतमानं रूप्यपलं, यत्स्मृति.– द्वे कृष्णले रूप्यमाषो धरण षोडशैव ते । शतमानं तु दशभिर्धरणैः पलमेव च ॥ अर्मोऽक्षिरुक् । शम्बलः पथिव्यय. ( पाथेयं ) । अव्ययमलिङ्गमसंख्यम् । ताण्डव नृत्यम् ॥ ३४ ॥ कवियमश्वमुखबन्धनम् । कन्दं मूलविशेषः । कर्पासं बादरम् । पार नद्याः पर पार्श्वम् । अवारमर्वाक्पार्श्वम् । युगंधरं रथकाष्ठम् । पूयं क्लिन्नासृक् । प्रग्रीवं वातायनम् । पात्रीव यज्ञोपकरणम् । यूष मुद्गादिनिर्यासः । चमसं यज्ञेऽम्बुप्रणयनम् । चिक्कसं यवपिष्टम् ॥ ३५ ॥ अर्धर्चादिगणे पूर्वैर्घृतादीनां पुंस्त्व यदुक्तं तन्निश्चितं छान्दसम् । अत इह लौकिके नोक्तम् । अथ प्रमादाल्लोके दृश्यते यदि तल्लिङ्गशेषवत् [ त्वा ]दङ्गीकार्यम् ॥ ३६ ॥ इति पुनपुंसकशेषः । स्त्रीपुंसयोः शेषो वक्ष्यते इति शेषः । अपत्यप्रत्ययान्ता. स्त्रीपुंसयोः– वासिष्ठः– वासिष्ठी, गार्ग्यः– गार्गी । द्विपदादयो जातिविशेषाः स्त्रीपुंसयोः– पुरुषः– पुरुषी, कठः– कठी, कुक्कुटः– कुक्कुटी, मृगः– मृगी, अयं गौः– इय गौः, अयं कपिः– इय कपिः, भ्रमरः– भ्रमरी, वरट.– वरटी, उरग.– उरगी, अयमहिः– इयमहिः । एते मल्लकादयः शब्दाः स्त्रीयोगैः सह पुमाख्याः स्त्रीनरलिङ्गा इति शेषः ॥ ३७ ॥ ३८ ॥ इति पुंस्त्रीलिङ्गशेष. । सिंहावलोकितेन ( न )पुंसीत्येव द्वयोः । भावे कर्मणि च ष्यञन्तः स्त्रीनपुंसकलिङ्ग.– यथा– उचितस्य भावः कर्म वा, ( गुणवचन )ब्राह्मणादिभ्यःकर्मणिच ( सू० ) इति ष्यञ्, एवं वैदग्ध्य– वैदग्धी, साम्रग्य– सामग्री । चोरस्य भावः कर्म वा चौरिका– चौरिकम् । क्वचिद्ग्रहण.देह– शौक्ल्यं, प्राकाम्यं, मानोज्ञकं, रामणीयक, साहायक, शैक्षोपाध्यायिका, गार्गिका, काठिका ॥ ३९ ॥ षष्ठ्यन्तपूर्वपदाः सेनादयः स्त्रीनपुंसकयोः– नृणां सेना नृसेनं नृसेना, शुनां निशा श्वनिश श्वनिशा, भूतनिश भूतनिशा, गवां शाला गे.शाल गोशाला । एवमितरे छायासुरे उदाहार्ये, यथा– वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छायं वृक्षच्छाया, यवसुर यवसुरा ॥ ४० ॥ आवन्तोत्तरपदो द्विगुरनन्तोत्तरपदो द्विगुश्चापुंसि स्त्रीनपुंसकयोः, नस्य च लुम्भवतीति प्रसङ्गाल्लक्षणानुवादः– तिसृणां रात्रीनां समाहारस्त्रिरात्र त्रिरात्री,

आबसन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ।
त्रिखट्वं त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥
त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ ।
परलिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेपि तत् ॥ ४२ ॥
अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।
तद्धितार्थो द्विगुः संख्यासर्वनामतदन्तकाः ॥ ४३ ॥
बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतिः ।
गुणद्रव्यक्रियायोगोपाधयः परगामिनः ॥ ४४ ॥

---

त्रयाणां तक्ष्णां समाहारस्त्रितक्षं त्रितक्षी ॥ ४१ ॥ इति स्त्रीनपुंसकशेषः । एते त्रिलिङ्गाः— पात्री भाजनं, पुट आच्छादनं, वाटो वृतिः, पेटः संहतिः परिच्छदश्च, कुवलं कोलिफलं, दाडिमं विदलम् । इति त्रिलिङ्गशेषः । स्वप्रधाने इतरेतरयोगद्वन्द्वे तत्पुरुषे चोत्तरपदस्य यल्लिङ्गं तद्भवति— कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ, कुलवियोग, विप्रकुलमिदं, अर्धं पिप्पल्या अर्धपिप्पलीयं, चन्द्रार्धोयं, परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ( सू० ) ॥ ४२ ॥ अर्थशब्दान्ताः प्राद्यलम्प्रभृतिपूर्वपदाश्च परोपगाः वाच्यलिङ्गा इत्यर्थः । ब्राह्मणायेयं ब्राह्मणार्था शिखरिणी, ब्राह्मणार्थं ओदनः, ब्राह्मणार्थं पयः, अर्थेननित्यसमासःसर्वलिङ्गता च ( वक्तव्या ) ( वा० ), प्रगत आचार्योस्याः प्राचार्या, प्राचार्यः, प्राचार्यं, प्रादयो गताद्यर्थे प्रथमया ( वा० ), प्रादिभ्यो धातुजस्य वाच्यो वा ( वा० ) इत्युत्तरपदलोपः । अतिक्रान्ता खट्वामतिखट्वा, अतिखट्वः, अतिखट्वं, अत्यादयः क्रान्ताद्यर्थे द्वितीयया ( वा० ) । अवक्रुष्टा कोकिलया चूतकलिकावकोकिला, अवकोकिलः, अवकोकिलं, अवादयः क्रुष्टाद्यर्थे तृतीयया ( वा० ) । परिग्लानाध्ययनाय पर्यध्ययना, पर्यध्ययनः, पर्यध्ययनं, पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ( वा० ) । निष्क्रान्ता मर्यादाया निर्मर्यादा, निर्मर्यादः, निर्मर्यादं, निरादयः क्रान्ताद्यर्थे पञ्चम्या ( वा० ) । अलं जीविकायै— अलंजीविका, अलंजीविकः, अलंजीविकम् । प्राप्ता जीविकां प्राप्तजीविका, प्राप्तजीविकः, प्राप्तजीविकम् । आपन्ना जीविकामापन्नजीविका, आपन्नजीविकः, आपन्नजीविकं, प्राप्तापन्ने च द्वितीयया ( सू० ) । वाच्यलिङ्गा इत्यर्थः । पञ्चसु कपालेषु संस्कृता पञ्चकपालापूरिका, पञ्चकपालः पुरोडाशः, पञ्चकपालं हविः । संख्या सर्वनाम च तदन्ताश्च वाच्यलिङ्गाः— एका, एकः, एकं, तिस्रः, त्रयः, त्रीणि, सर्वा, सर्वः, सर्वम् । संख्यान्ताः— ऊनास्तिस्रो यासां ता ऊनतिस्रः, ऊनत्रयः, ऊनत्रीणि । सर्वनामान्ताः— द्वाभ्यामन्या द्व्यन्या, द्व्यन्यः, द्व्यन्यत् ॥ ४३ ॥ बहुव्रीहिर्वाच्यलिङ्गः— चित्रा गावोस्याश्चित्रगुः स्त्री, चित्रगुर्ना, चित्रगु कुलम् । अदिङ्नाम्नामिति किं— दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा, एवं पूर्वोत्तरा सा विदिक् । गुणादिभिर्योग उपाधिः प्रवृत्तिनिमित्तं येषां ते परगामिनो वाच्यलिङ्गाः । गुणोपाधि— शुक्ला शाटी, शुक्लः पटः, शुक्लं वस्त्रम् । द्रव्योपाधि— दण्डिनी स्त्री, दण्डी पुमान्, दण्डि कुलम् । क्रियोपाधि— पाचिका, पाचकः, पाचकम् ॥ ४४ ॥ कर्त्रर्थे संज्ञावर्जितः कृदन्ता वाच्यलिङ्गाः— कर्त्री, कर्ता, कर्तृ, कुम्भकारी, कुम्भकारः, कुम्भकारम् । असंज्ञायामिति किं— भद्रः, व्याघ्रः । कर्तृकर्मार्थे कृत्या वाच्यलिङ्गाः— वास्तव्या, वास्तव्यः, वास्तव्यं, वसेस्तव्यत्कर्तरि णिच्च ( वा० ), कर्तव्या, कर्तव्यः, कर्तव्यम् । कर्तरि कर्मणीति किं— स्नातव्यं त्वया, ब्रह्मभूयं, हत्या । असंज्ञायामित्येव— सूर्यः, मिश्रोऽन्योऽनरे ( सू० ) । तेन रक्तमित्याद्यर्थेऽणादितद्धितान्ता वाच्यलिङ्गाः— हरिद्रया रक्ता हारिद्री, हारिद्रः, हारिद्रं, लाक्षणिमयुं( मोर )का लाक्षिकी, लाक्षिकः, लाक्षिकं, कृत्तिकाभिर्युक्ता कार्तिकी पौर्णमासी, कार्तिको दिवसः,

कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।
अणाद्यन्तास्तेनरक्ताद्यर्थे नानार्थभेदकाः ॥ ४५ ॥
षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।
परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥

इति लिङ्गसंग्रहवर्गः । ९ ।

---

कार्त्तिकमहः । इन्द्रो देवतास्या ऐन्द्री ( ऋक् ), ऐन्द्रो मन्त्रः, ऐन्द्रं हविः । असंज्ञायामित्येव– श्रवण पौर्णमासी, अश्वत्था पौर्णमासी, सहार्थाश्रवणाश्वत्थाभ्याम् ( सू० ) इत्यणो लुप् । नानाविधार्थविशेषा येषां ते वाच्यलिङ्गाः– को ब्रह्मा, कं शिरः, नभः खं, नभा श्रावणः । नानार्थो विशेषणानि वेत्येके– मूर्खो, मूर्खा, मूर्खं, विदुषी, विद्वान्, विद्वत् ॥ ४५ ॥ ष्णान्ताषट् ( सू० ) इति षट्संज्ञकाः, तथा युष्मदस्मच्छब्दौ, आख्यातान्यव्ययानि च त्रिलिङ्ग्यां समानि लिङ्गकृतविशेषरहितानीत्यर्थः । षट् स्त्रियः, षड्नराः, षट् कुलानि, पञ्च स्त्रियः, पञ्च शराः, पञ्चेन्द्रियाणि, त्वं स्त्री, त्वं पुमान्, त्वं कुलं, अहं स्त्री, अहं पुमान्, अहं कुलं, ब्रूते स्त्री, ब्रूते पुमान्, ब्रूते कुलं, नाना स्त्रियः, नानादेशाः, नानाकुलानि, उच्चैः स्त्री, उच्चैस्तरुः, उच्चैर्वनं, तत्र पुरि, तत्र देशे, तत्र वने, एवं कति स्त्रियः, कति जनाः, कति स्थानि । लिङ्गविशेषविधौ पूर्वापरविरोधे परं लिङ्गं भवति । असुरपर्यायाः पुंस्त्व इत्यस्य विषये– नैर्ऋतः, राक्षसः । द्व्यच्कमसिसुसन्नन्तमिति तृतीय इत्यस्य विषये– इदं तेजः, यशः । इहोभयं प्राप्नोति– इदं रक्षः, परत्वात्क्लीबं । इह यत्रोक्तं तल्लक्ष्यतो द्रष्टव्यं, यथा– गोधा पुंस्त्वजापि स्त्री, तथा पोटा नपुंसकमपि स्त्री । तथाऽव्यक्ते गुणसन्देहे नपुंसकलिङ्गं प्रयुज्यते– किं तस्या जातं स्त्री पुमान्वा, धाक्य स्वमाशादिभिरपि क्षुप्रनिहन्तुम् । तथा तयप्प्रत्ययान्तं धर्मवृत्ति स्त्रीनपुंसकयोः– वर्णानां चतुष्टयी, वर्णानां चतुष्टयम्, वेदानां त्रयी, वेदत्रयम् । धर्मवृत्ति तु वाच्यलिङ्गं– त्रय्य स्थितयः, त्रये लोकाः, त्रयाणि जगन्ति । तथा छन्दसोऽण् स्वार्थे क्लीबे– गायत्र्येव गायत्रं, अनुष्टुबेवानुष्टुभम् । तथा इक्-स्त्यन्तं पुंसि– अयं वृद्धिः, अयं पचति । तथा दारुहस्तेश्च स्त्रियो– इयं दारुहस्तः, गृहकण्टिका, छत्रिका, दण्डिका, नालिका, नासिका । तथा प्रमाणाद्या अजहल्लिङ्गवचनाः– वेदाः प्रमाणं, स्मृतयः प्रमाणं, भूतमिव ब्राह्मणी, विनाशियो भद्रम् ॥ ४६ ॥ इति लिङ्गसंग्रहवर्गः । ५ । [ इत्यमरसिंहकृतौ नामलिङ्गानुशासने । सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥ ]

इति श्रीमत्क्षीरस्वाम्युत्प्रेक्षितेऽमरकोशोद्घाटने सामान्यकाण्डस्तृतीयः समाप्तः ।

# APPENDIX I.

An alphabetical list of authors and works quoted by Kshirasvâmin in his commentary on Amarakosha.

(The figures refer to pages).

अनेकार्थः ( अनेकार्थकोशः )–A lexicon, 67.

अभिधानकारः–Author of Abhidhânakosha, 32.

अभिधानशेष.–A supplement to Abhidhânakosha, 235.

अमरमाला–A lexicon, 12, 15, 29.

अश्वतन्त्रम्–A work on horses (by some writer like Sâlihotra ?) (see Notes ), 129.

आचार्यः–A commentator ( कोहलः ? ), 50.

इन्दुः–Author of a medical Nighantu, 56, 57, 58, 59, 61, 63, 65, 67, 68, 69, 71, 75, 76, 77, 79, 80, 81, &c.

उत्तररामचरितम्–A drama by Bhavabhûti, 85, 140, 175, 227, 229.

उदीच्याः–The Northern school of grammarians, 185.

उद्भटः–A writer on Rhetoric (of Kâsmere), 224.

उपाध्याय –A commentator on Amarakosha, 2, 41, 54, 99, 140, 141, 164.

कात्य–A very ancient lexicographer, (see Introduction), 8, 10, 15, 16, 21, 23, 24, 27, 29, 30, 35, 36, 37, 39, 41, 47, 48, 50, 52, 54, 55, 89, 94, 104, 115, 118, 122, 125, 131, 144, 148, 151, &c.

कादम्बरी–A prose work by Bânabhatta, 28.

कालिदासः–Author of Raghuvamsa, Kumârasambhava, &c , 52, 90.

काव्यादर्श –A work on Rhetoric by Dandin, 191.

काशिका–A complete commentary on Pânini, 35, 47, 118, 215, &c.

काश्मीराः–The Kâsmere recension of Amarakosha, 132.

किरातार्जुनीयम्–A poem by Bhâravi, 179, 210, 228, 236, &c.

कुमारसम्भवम्–A poem by Kâlidâsa, 9, 52, 90, 109, 176, 196, 202, 224, 225, 226, 227, &c.

कुमारिलभट्ट–Author of the Mîmâmsâ-Vârttikas, 28, 166, 207.

कौटिल्यः–Author of a work on Arthasâstra, 34, 42, 49, 50, 51, 125, 137, 162, 185, 186, 193, 196, 210, 211, &c.

कोटः–A commentator on Amarakosha, 2, 3, 40, 41, 50, 59, 60, 77, 86, 106, 130, 131, 153, 192, 193, &c.

Page

98 अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

103 पद्भ्यामेव ययातयेति

119 अभिवाद्योपसंग्राह्यः

162 निष्प्रवाणिर्नवः पटः

167 येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम्

175 सूर्य. समेपा समः

178 कुलस्यान्त. प्रभु प्रिय.

180 प्रिय[या]दर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः ।
निर्वाणमाप्यते येन सरागेणापि चेतसा ॥

186 संवाहनं स्पर्शसुखम्

188 अकरणिरिह भूयादप्रशस्तस्य धातुः

189 पुलका इव धान्येषु
पुलाककारी विपुलाशयः स्यात्

190 तपो न कल्कोऽध्ययनं न कल्कः

192 विचरेद्युगमात्रदृक्

193 वर्जयेत्कटधूमं तु

195 प्रकीर्णभाण्डामनवेक्ष्यकारिणीम्
क्षणे रक्ष्याः कुलस्त्रियः
क्षणपरपुरजिद्दत्तशूलप्रहारान्

199 वृत्तदेहः स्नायुसारः

201 यदध्यासितमर्हद्भिस्तद्धि तीर्थम्
तीर्थं तदव्यक्तव्ययोः
एकमेवेदं संविद्रूपम्
प्रवृत्तौ च निवृत्तौ च संविद स्थापयेदणे
धर्मस्योपनिपत्परा

202 जीवेच्च शरदां शतम्
पद्मापदि माधवः
सूर्याशव शशिनि लब्धपदा यथैव
नवनखपदलेखालाञ्छितं बाहुमूलम्
बाहुप्रमाणं परिधिरच्छिन्नाप्नोतिपञ्चकः
आधिं प्राप्तो यो न मुह्येत्स धीरः
अनुबन्धमवस्था च ज्ञात्वा दण्डं निपातयेत्

203 सिन्धोः परमपूरुषम्

205 पर्वतर्जं व्रजेच्चैनाम्

206 व्याप्ते व्योमनि वर्ष्मणा

Page

207 क्षत्त्रेनः कृतं पूर्वम्
गर्भस्थेन समः सदा
रम्भागर्भमृदुः
भर्तृगर्भद्रुहा चैव
दुन्दुभ्या किल तत्कृतं पतितया यद्
द्रौपदी हारिता

208 जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः

209 दर्भा. कृष्णाजिन मन्त्रा ब्राह्मणा हविरग्नय ।
अयातयामान्येतानि नियोज्यानि पुन पुन ॥
न शर्मोः मत्यय गच्छेत्
अमयान्श्रावयेच्छिष्यम्

210 गुणिना नालयं कुर्यात्
वाक्पारुष्येऽत्ययः शतम्
सर्वस्यैव हि दानस्य ग्रहीता गुरुरुच्यते ।
कन्यायास्त्वेव विशायाः प्रदाता पूज्यते गुरुः ॥
प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जन.

211 कृपाकपार्यामभ्येति सत्वपः किं न गोत्रभिद्
सर्वाः क्रिया मन्त्रमूला नृपाणाम्
महापातकिना पुंसां भवेत्प्राणान्तिका क्रिया
गुरुदेवक्रियारतः
क्रिया विना को हि जानाति कृत्स्नम्
अतो न रोदितव्यं हि क्रिया कार्याः प्रयत्नतः
विच्छायः पुरुषो भवेत्
सकान्तच्छाय आदर्शः
सप्त कक्ष्या अतिक्रम्य
परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरीभवेत्
तानि कृत्वाहताताव

212 वारं वारमुदारसगरमुखे
संगरो विक्रियाकरः
अन्योन्य वृत्तसंगरौ
संगरे शरण सुहृत्

213 आडम्बराणि पूज्यन्ते स्त्रीषु राजकुलेषु च
जये धरित्र्याः पुरमेव सारम्
वर कूपशताद्वापी

214 मात्राशी सर्वकालं स्यात्

215 चतु.पार्टामद तन्त्रम्
साधारणं भवेत्तन्त्रम्

*Vide* Notes for the verification of some unverified passages in the Commentary

